'पुच्छादुदसने पर्यसने वा' इति णिङ् । द्विदाम्नीरिति । 'दामहायनान्ताच्च' इति सख्यादेर्ङीप् । घटोध्नीरिति । 'ऊधसोऽनङ्' समासान्त. । 'बहुव्रीहेरूधसो ङीष्' घ्यूध्नीरिति । 'संख्याव्ययादेर्ङीप्' इति संख्यादित्वाद् ङीप् ॥

विमिश्रयन्विश्वमिदं यशोभरैः पेपीयमानैर्भगवान्भुजंगराट् ।

अमर्षितस्यापदि नो मधुद्विषस्तस्याग्रियत्वेन जनुर्ग्रहीष्यते ॥ १७ ॥

भुजंगराट् अनन्तो भगवान् तस्य मधुद्विषो अग्रियत्वेन अग्रजत्वेन जनुर्जन्म ग्रहीष्यते । पेपीयमानै क्रियासमभिहारेण वर्धमानैर्यशोभैररतिशयितैर्यशोभिः इदं विश्वं विमिश्रयन् मिश्रं कुर्वन् नोऽस्माकमापदि अमर्षितस्य अक्षान्तस्य । विमिश्रयन्निति । 'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्' इति करणे णिच् । पेपीयमानैरिति । धातोरेकाचो हलादे क्रियासमभिहारे यङ्' पौन पुन्यं भृशार्थो वा क्रियासमभिहार । 'लिड्यङोश्च' इति धातो.-पीआदेश । 'भृपस्तितिक्षायाम्' इति सेटो निष्ठाया[मि] । किच्चाभावात् गुण. । अग्रियेति । 'घच्छौ च' इत्यग्रशब्दाद्भावे घ ॥

चङ्क्रम्यमाणानसदध्वनौजसा शोशूयमानान्समरे जिघांसतः ।

तान्दन्दशूकान्सहकृत्वरी हरेर्मायाग्र्यधाम्न्येष्यति नन्दतो जनिम्॥१८॥

माया हरे सहकृत्वरी सहकारिणी सती नन्दतो नन्दगोपात् जनिं जन्म एष्यति । दन्दशूकान् हिंस्रान् असुरान् समरे जिघासत असदध्वना दुर्मार्गेण चङ्क्रम्यमाणान् कौटिल्येन गच्छत ओजसा शोशूयमानान् भृशं वर्धमानान् अग्र्यधाम्नि अग्र्यं श्रेष्ठं धाम प्रभावो यस्या. ॥—चङ्क्रम्यमाणानिति । 'क्रमु पादविक्षेपे' । 'नित्यं कौटिल्ये गतौ' इति गत्यर्थात् कौटिल्य एव यङ् । 'नुगतोऽनुनासिकान्तस्य' इत्यभ्यासस्य नुक् । दन्दशूकानिति । 'दंश दंशने । 'लुपसदचरजपजमदहदशगॄभ्यो भावगर्हायाम्' इति धात्वर्थगर्हायामेव यङ् । 'यजजपदशां यङ ' इत्युक. । अग्र्यधाम्नीति । 'अग्राद्यत्' 'तत्र भव ' इत्यर्थे 'अन उपधालोपिनोऽन्यतरस्याम्' इति वा ङीप् । 'अल्लोपोऽन.', 'अलोऽन्त्यात्पूर्व उपधा', 'अदर्शनं लोप ' । शोशूयमानानिति । 'विभाषा श्वे ' इति लिड्यङोर्वा सप्रसारणम् । 'शेश्वीयमानान्' इति वा पाठ ॥

उद्द्योतितं येन विपत्तमःसु वः प्रागप्यतिप्रद्युतितस्य शार्ङ्गिणः ।

तस्याद्य नः पालयितुं व्रजेत गां साहायकेनैधयितुं मुदं सुराः ॥१९॥

हे सुरा., यूयं साहायकेन सहायेन व्यापारेण तस्य शार्ङ्गिण. मुदं एधयितुं वर्धयितु गा भुवं व्रजेत गच्छेत। येन शार्ङ्गिणा व विपत्तम सु विपत्स्वेव तम सु प्रागपि उद्द्योतित प्रज्वलितं अत्यन्ततेजस्विना भूतं अद्य न' पालयितु अतिप्रद्युतितस्य अतिशयेन प्रद्योतितुमारब्धस्य ॥—उद्द्योतितमिति । 'द्युती दीप्तौ' । भावे क्तः । 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' इति सेटो निष्ठाया. पक्षे किच्चाभाव. । प्रद्युतितस्येत्यादिकर्मणि किच्चपक्ष । पालयितुमिति । 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्' इति

चुरादिभ्यः स्वार्थे णिच् । पुषयितुमिति । 'हेतुमति च' इति स्वतन्त्रस्य कर्तुः प्रेरकः त
द्व्यापारे प्रेषणादौ वाच्ये णिच् । साहायकेनेति । 'सहायाद्वा' इति वुञ् ॥

महीयमानस्य महीं भजेज्जगद्गोपायितुं कामयितुर्मनुष्यताम् ।
ऋतीयमानस्य धृतिं सपर्यया देवस्य शिश्वाययिषद्युयौवनम् ॥ २० ॥

युवयौवनं स्वगुणवतिसमूहं देवस्य सपर्यया पूजया धृतिं सुखं शिश्वाययिषत् वर्धयितु
मिच्छत् महीं भजेत गच्छतु । जगत् गोपायितुं रक्षितुं मनुष्यतां कामयितुरेवमृतीयमानस्य ॥—
महीयमानस्येति । 'महीङ् पूजायाम्' । 'कण्ड्वादिभ्यो यक्' । गोपायितुमिति । 'गुपूधूपविच्छि
पणिपनिभ्य आयः' । ऋतीयमानस्येति । ऋतिः सौत्रो धातुर्घृणायां वर्तते । 'ऋतेरीयङ्' ।
कामयितुरिति । 'कमेर्णिङ्' । शिश्वाययिषदिति । श्वेर्णिजन्तात् सनि लट् 'णौ च
संश्चङोः' इति संप्रसारणे विकल्पः । यौवनेति । युवतिशब्दात् भिक्षादित्वात् समूहे पुंवद्भावा
त्तिप्रत्ययनिवृत्तिः । 'अन्' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपाभावः ॥

पादाम्बुभूत्या पवितां विधाय गां यशो गुम्फित्वा विभवोऽपि भूयसि ।
अजोऽतृषित्वाऽसुरमारजा रुचो क्षुधो लुभित्वाशु पदं स्वमेष्यति ॥ २१ ॥

अजो विष्णुरेवं कृत्वा आशु स्वं पदमेष्यति प्राप्स्यति । किं कृत्वा । पादाम्बुभूत्या श्री
पादारविन्दपरागेण गां भूमिं पवितां विधाय यशो गुम्फित्वा ग्रथितं कृत्वा भूयसि बहु
तरेऽपि विभवे अतृषित्वा संतोषमकृत्वा रुचः असुरमारजाः रुचः पीताः लुभित्वा अ
पनीय ॥—पवितामिति । पूङ् । 'पूङश्च' इति वेट् । 'पूङः क्त्वा च' इति कित्त्वाभावः ।
गुम्फित्वा इति । 'गुफ गुम्फ ग्रन्थे' । 'नोपधात्थफान्ताद्वा' इति पाक्षिकं कित्त्वाभावः । लु
भित्वेति । 'लुभ अपनयने' । वा । 'वसतिक्षुधोरिट्' इति वा कित्त्वप्रतिषेधः । अतृ
षित्वा इति । 'ञितृष पिपासायाम्' । 'तृषिमृषिकृशेः काश्यपस्य' इति सेटः क्त्वाप्रत्ययस्य
वा कित्त्वम् । एष्यति । 'स्यतासी लृलुटोः' इति स्यः ॥

कृत्वेति दिद्योतिषु निर्मनोरुजं हरिस्पृशा सार्वगिराविधाय च ।
गोप्ता सतां सत्सु सपक्षतोऽध्ययीद्दिद्युतिषु वेधा निजधाम विभ्रगुः ॥ २२ ॥

स वेधाः सत् सदः तां सभामिति सार्वगिरा सर्वस्मै हितया गिरा निर्मनोरुजं मनोरुजया
मनःपीडया निर्गतं कृत्वा तत तस्मात् स्थानात् निजधाम अध्ययीत् गतवान् । सतां च
धर्मनिरतानां गोप्ता । सपक्षतः स्थिरबुद्धिः । विभ्रगुः विभ्रा गावो यस्य । दिद्यो
तिषु द्योतितुमिच्छु । हरिस्पृशा मनोहरया हरि स्पृशतीति । सत्सु धामप्रतिक्रान्तम् ॥—
दिद्योतिषुमिति । 'रलो व्युपधाद्धलादेः संश्च' इति सेटः सनः पाक्षिके कित्त्वाभावे गुणः ।
सार्वगिरेति । [सर्वस्मै हिता । 'सर्वपुरुषाभ्यां णढञौ' इति णप्रत्ययः आदिवृद्धिः] गॄ
शब्दे । संपदादित्वात् क्विप् । 'अपृक्त एकाल्प्रत्ययः' इत्यपृक्तसंज्ञा । 'वेरपृक्तस्य' इति
वैर्लोपः । तत्पुरुषः समानाधिकरणः कर्मधारयः इति कर्मधारयसंज्ञा । 'पुंवत्कर्मधारय–

इति पूर्वपदस्य पुंवद्भावः। निजधामेति। विशेषणसमास । 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्युपसर्जनसञ्ज्ञा। 'उपसर्जनं पूर्वम्' इति निजशब्दस्य पूर्वनिपात. । निर्मनोरुजमिति। 'निरादय. क्रान्ताद्यर्थे पञ्चम्या' इति समास. । 'एकविभक्ति चापूर्वनिपाते' इति मनोरुजाशब्दस्योपसर्जनसञ्ज्ञा। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्व । 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसञ्ज्ञाया सुप्। वेधा इति। 'अर्थवदधातुरप्रत्यय प्रातिपदिकम्' इति प्रातिपदिकसंज्ञा। चित्रगुरिति। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्व । अतिद्यु। 'अत्यादय. क्रान्ताद्यर्थे द्वितीयया' इति समास । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम्। 'एच इग्घ्रस्वादेशे' इति ह्रस्वादेशे 'स्थानेऽन्तरतम' 'ऊकालोऽज्झ्रस्वदीर्घप्लुत'। गोप्ता इति। 'आयादय आर्धधातुके वा' इति तृचि पाक्षिक आय । हृदिस्पृशेति। 'हृद्युभ्या ङेरुपसंख्यानम्' इत्यलुक्। अविचाचलिरिति। चलेर्यङ्। 'सहिचलिपतिभ्यो यङन्तेभ्य किकिनौ वक्तव्यौ' ॥

ऐन्द्रीं पुरीमाजुहुवे चकासती या शूरसेनेषु विभाति नीवृति ।
गुण्येषु पुण्या मधुरेति पूरभूत्तत्रोग्रसेनः किल पार्थिवाग्रणीः ॥ २३ ॥

मधुरा इति प्रसिद्धा या पूरैन्द्रीं पुरीमाजुहुवे स्पर्धया आहूतवती। तत्र उग्रसेन पार्थिवाग्रणी राजश्रेष्ठ· अभूत् किल। शूरसेनेषु नीवृति जनपदे चकासती शोभमाना विभाति (दीव्यमाने)। गुण्येषु गुणवत्सु पुण्या शुद्धकरी ॥—शूरसेनेष्विति । शूरसेनाना राज्ञां निवास इति विगृह्य 'तस्य निवास' इत्यण्। तस्य 'जनपदे लुप्'। 'लुपि युक्तवद्व्यक्तिवचने' इति प्रकृत्यर्थवदेव लिङ्गसंख्ये। गुण्येष्विति । यत्प्रकरणे 'अन्येभ्योऽपि दृश्यते' इति यत्प्रत्यय । यानि विशेषणानि तेषा पुंवद्भावाभाव (?)। पार्थिवाग्रणीरिति। 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यण्। 'तस्येश्वर' इत्यर्थे। 'अग्रग्रामाभ्या नयतेर्णो वक्तव्य' इति णत्वम्। नीवृतीति सपदादित्वाद्वृते· क्विप्। 'नहिवृति–' इति नेर्दीर्घ । आजुहुवे इति। 'ह्वेञ् स्पर्धायामाह्वाने' । 'अभ्यस्तस्य च' इति द्विर्वचनात् पूर्वं संप्रसारणम् ॥

ऊवुस्तथान्ये न नृपा वृषापि नो ववौ यथोवाय यशःपटं गुणैः ।
सोऽविद्धचेता विषयेण तेन वा निजेव पत्नी पतिवत्न्यभून्मही ॥२४॥

स उग्रसेनो गुणैरुरागाभिगाभिकै सांग्रामिकैश्च यश पट यश एव पटं यथा उवाय वयति स्म, तथा अन्ये नृपा न ऊवु उतवन्तः। वृषा इन्द्र· तथा नो ववौ न उतवान्। विषयेण विषयै शब्दादिभिरविद्धचेता अनभिभूतचित्त । तेन निजा पत्नीव मही पतिवत्नी सभर्तृका अभूत् ॥–विषयेणेति । 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्' इति जात्यर्थस्य वा बहुवद्भाव । विद्धेति। 'न संप्रसारणे संप्रसारणम्' इति पूर्वं परस्य संप्रसारणे कृते पूर्वस्य प्रसक्तं प्रतिषिध्यते। उवायेति। 'वेञ् तन्तुसंताने'। 'वेञो वयि' इति 'लिटि वयो य' इति यकारस्य संप्रसारण प्रतिषिध्यते। ऊवुरिति। 'वश्चास्यान्यतरस्या किति' इति यकारस्य वा वकार· । ववाविति। 'वेञ' इति संप्रसारणद्वयं प्रतिषि-

अथ शौरि जन्यया भार्यया सह तौ श्वशुरौ श्वशुरं श्वश्रूं च प्रणम्य तदीयात् वस्त्यात् गृहात् निरैयत निर्गतवान् । बाष्पायमाणौ बाष्पमुद्वमन्तौ वियोगात्युपदातृचेतसौ । उपदातृ क्षयं गन्तृ । साधितार्थया वन्धुतया वन्धुसमूहेन अन्वितः । अर्थो विवाह ॥—श्वशुराविति । 'श्वशुर श्वश्र्वा' इति श्वशुर शिष्यते । 'श्वशुरस्योकाराकारयोर्लोपश्चेति वक्तव्यम्' इति ऊङि श्वश्रू । साधितेति । 'सिध्यतेरपारलौकिके' इत्यात्वम् । उपदातृ इति । दीङ् क्षये । 'मीनातिमिनोतिदीङा ल्यपि च' इत्यात्वम् । वन्धुतयेति । 'ग्रामजनवन्धुसहायेभ्यस्तल्' ॥

शोणीर्वहूर्गा धवलाश्च वर्करान्पद्रूश्च दासीर्गुणशालि हास्तिकम् ।
पुत्र्यै पिता यौतकमुन्मनीभवन्नदिक्षदश्वान्रथकट्यया सह ॥ ३४ ॥

पिता पुत्र्यै यौतक स्त्रीधन अदिक्षत् दत्तवान् । किं तत् । शोणी धवलाश्च वहू गा. वृषभाश्च । वर्करान् तरुणान् पशून् तरुणीश्च । पद्रू दासीश्च । गुणशालि हास्तिक हस्तिना हस्तिनीना च समूहम् । अश्वान् अश्वाश्च । रथकव्यया रथसमूहेन सह । उन्मनीभवन् उत्कीभवन् ॥—[गा इति । ] 'ग्राम्यपशुसघेष्वतरुणेषु स्त्री' इति स्त्री शिष्यते । तस्तुवर्करानिति(?) । अश्वानिति । 'अनेकशफेष्विति वक्तव्यम्' इति पुमान् शिष्यते । शोणीरिति । 'शोणात्प्राचाम्' इति वा ङीप् । पद्रूरिति । 'वोतो गुणवचनात्' इति वा ङीप् । हास्तिकमिति । 'अचित्तहस्तिधेनोष्ठक्' समूहे हस्तिनी । प्रातिपदिकात्तु 'भस्याढे तद्धिते' पुंवद्भावो वक्तव्य. । रथकट्ययेति । 'इनित्रकट्यचश्च' इति रथात् कट्यच् । पुत्र्यै इति । गौरादि. । केचिच्छार्ङ्गरवादिपाठात् ङीनिति । अन्यस्त्वाह—पुत्राद्वेति पुत्रा पुत्रीति ॥

व्यतिप्रभानो विविधस्तदोच्चकैस्तत्रैधते माङ्गलिकः स्म निस्वनः ।
रथेन कंसप्रगृहीतरश्मिना जायापतीभ्यामथ निर्ययै शनै. ॥ ३५ ॥

तदा तत्र माङ्गलिक· मङ्गलार्थो विविधो निस्वन उच्चकै एधते स्म । व्यतिप्रभान अन्योन्यविनिमयेन प्रकर्षेण शोभमान अथ जायापतीभ्या रथेन शनै. निर्ययै निष्क्रान्तम् । कंसप्रगृहीतरश्मिना कसः सारथ्यमकरोत् ॥—एधते इति । 'एध वृद्धौ' । 'भूवादयो धातव ' इति धातुसंज्ञा । 'उपदेशेऽजनुनासिक इत्' इति अकारस्येत्सज्ञायाम् 'तस्य लोप ' इति लोप । 'अनुदात्तङित आत्मनेपदम्' । निर्ययै इति । 'भावकर्मणो ' इत्यात्मनेपदम् । व्यतिप्रभान । 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम् ॥

शस्त्रापगोरं चलतां पदोद्धतं रजो भटानामदधत्प्रभां रवेः ।
क्ष्वेला च वादित्रनिनादमासला घनाघनानां निनदं निरास्थत ॥ ३६ ॥

भटाना पदोद्धतं रज रवे. प्रभा अदधत् अपिवत् । शस्त्रापगोर शस्त्राण्युद्यम्य चलता गच्छता क्ष्वेला सिंहनाद च घनाघनाना वर्षाकालमेघाना निनदं निरास्थत निर-

संश्रृण्वतस्तामवृधद्गिरं हृदि क्रुधारदक्षिद्वयमाशु रक्तिमा ।
घर्माम्बु कंसस्य तदासिचत्तरां स्रुतोऽङ्गरागोऽलिपताखिलं वपुः ॥४०॥

तदा तां गिरं सश्रृण्वतः कंसस्य हृदि क्रुत् क्रोध अवृधत् ववृधे । अक्षिद्वयं रक्तिमा रक्तत्वं आशु आरत् प्राप्त । घर्माम्बु अखिलं वपु असिचत्तरा अतिशयेन सिक्तमकरोत् । स्रुत अङ्गराग. अलिपत लिप्तमकरोत् ॥–असिचत्तरामिति । 'लिपिसिचिह्वश्च' इत्यङ् । अलिपतेति । 'आत्मनेपदेष्वन्यतरस्याम्' इत्यङ् । अवृधदिति । पुषादिद्युताद्य्लृदितः परस्मैपदेषु' इत्यङ् । आरदिति । 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ् ॥

रजोविलिप्तीं तनुमुद्वहन्बलक्रीतीं विधास्यन्निजजीवितस्थितिम् ।
स शङ्खभिन्नीर्नृपतिर्द्विषां तनूः कर्तारमुग्रं करवालमाददे ॥ ४१ ॥

स नृपति उग्रं करवलं आददे । रजोविलिप्तीं अल्पेन रजसा विलिप्तां तनुं उद्वहन् । निजजीवितस्थितिं बलक्रीतीं बलेन क्रीता विधास्यन् । द्विषां तनू शङ्खभिन्नी· कर्तारम् ॥ आददे इति । 'डु दाञ् दाने' । 'आङो दोऽनास्यविहरणे' इति तङ् । बलक्रीतीमिति । 'क्रीतात्करणपूर्वात्' इति ङीप् । रजोविलिप्तीमिति । 'क्तादल्पाख्यायाम्' इति ङीष् । शङ्खभिन्नीरिति । 'बहुव्रीहेश्चान्तोदात्तात्' इति ङीष् ॥

मनोज्ञगात्री मधुरारुणाधरा शातोदरी चन्द्रमुखी पृथुस्तना ।
नृपेण दोष्णा सहजा जिघांसुना शीर्षण्यवालेषु हठादगृह्यत ॥ ४२ ॥

शात कृशम् । चन्द्रमुखीति । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति वा ङीष् । मनोज्ञगात्रीति । 'अङ्गगात्रकण्ठेभ्योवक्तव्यम्' इति वा ङीष् । शातोदरीति । 'नासिकोदरौष्ठजङ्घादन्तकर्णश्रृङ्गाच्च' इति वा ङीष् । मधुरारुणाधरेति । 'न क्रोडादिबह्वचः' इति ङीष् । प्रतिषेधे टाप् । शीर्षण्येति । 'शरीरावयवाद्यत्' इति शिरश्शब्दाद्यत् । 'ये च तद्धिते' 'वा केशेषु [शिरस शीर्षन्नादेशो वक्तव्यः' ] इति शीर्षन्नादेश. । 'ये चाभावकर्मणो' इति प्रकृतिभाव । दोष्णेति । 'पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु' इति दोषन्नादेशः॥

अनासिका शूर्पणखा कृता न किं रामेण नो वा किमहानि ताटका ।
खले ब्रुवत्येवमवाङ्मुखी सती तस्मिन्नशेषा जनताथ सारुदत् ॥ ४३ ॥

तस्मिन् एव ब्रुवति अशेषा सा जनता अवाङ्मुखी सती अरुदत् । रामेण शूर्पणखा अनासिका किं न कृता । ताटका नो वा किमहानि इति खले ॥–अरुददिति । 'रुदिर् अश्रुविमोचने' । 'इरितो वा' इत्यङ् । अनासिकेति । 'सहनञ्विद्यमानपूर्वाच्च' इति ङीष्प्रतिषेध । शूर्पणखेति । 'नखमुखात्संज्ञायाम्' इति ङीष्प्रतिषेध । अवाङ्मुखीति । 'दिक्पूर्वपदान्ङीप्' इति ङीप् ॥

१. 'अघानि' इति युक्तम्.

गम । 'आद्यन्तौ टकितौ' । अच्छिदुरामिति । 'संहितायाम्' इत्यधिकृत्य 'छे च' इति तुक् । मा च्छिददिति । 'आङ्माङोश्च' इति नित्यं तुक् । ह्रीच्छेदिति । 'ह्रीच्छ लज्जायाम्' । 'दीर्घात्' इति तुक् । रुषा च्छायामिति । 'पदान्ताद्वा' इति तुक् ॥

न्यस्याशु पाणावसिमुज्ज्वलं रथे गव्यादिजस्त्रीजनरक्षणदक्षिणम् ।

अक्रय्यमक्षय्यमुपेयुषा यशो रक्ष्ये हि भाव्यं प्रभुणा दयालुना ॥४८॥

पाणौ उज्ज्वलं असिमाशु रते न्यस्य (लोट्) स्थापय । गव्यादिजस्त्रीजनरक्षणदक्षिणम् । गव्या गोसमूह । रक्ष्णो रक्षणम् । प्रभुणा रक्ष्ये जने विषये दयालुना भाव्यं अवश्य भवितव्यम् हि अक्षय्यं क्षेतुमशक्यं अक्रय्य क्रयार्थरहित यश उपेयुषा —न्यस्येति । 'इको यणचि' इति इकारस्य यकार । पाणौ असिमिति । 'एचोऽयवायाव' इति औकारस्यावादेश । गव्येति । 'खलगोरथात्' इति यप्रत्यये 'वान्तो यि प्रत्यये' इति ओकारस्यावादेश । भाव्यमिति । 'ओरावश्यके' इति ण्यति वृद्धौ 'धातोस्तन्निमित्तस्यैव' इत्यावादेश । क्षय्येति । 'क्षय्यजय्यौ शक्यार्थे' इत्ययादेशो निपात्यते । अक्रय्यमिति । 'क्रय्यस्तदर्थे' इत्ययादेशो निपात्यते । रथ इति । 'एक पूर्वपरयो' इत्यधिकृत्य 'आद्गुण' इति एकादेश । तस्य 'अन्तादिवच्च' इति सुप् आदिवद्भाव । पदसंज्ञा ॥

नारीवधान्न न्यवृतत्स तद्गिर' कद्रूजाहिंस्र. श्रुतवानपीदृशीः ।

तां संहितोरूं युवतिं सरोरुदां शौरीर्व्यमार्क्षीत्कुररीमिवेक्षिता ॥ ४९ ॥

स कस ईदृशी तद्गिर श्रुतवानपि नारीवधात् न न्यवृतत् निवृत्त । शौरी कुररीमिव मरोरुदा भृशायमानरोदनसहिता युवतिं ईक्षिता व्यमार्क्षीत् विमर्शं कृतवान् । सहितोरूमिति । सहितावूरू यस्या. । कद्रूजहिंस्र सर्पवद्धिंसाशील ॥—कुररीमिति । 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । सहितोरूमिति । 'सहितशफलक्षणवामादेश्च' इत्यूङ् । कद्रू इति 'सज्ञायाम्' इति कद्रूशब्दादूङ् । नारीति 'शार्ङ्गरवाद्यञो ङीन्' नृनरयोर्वृद्धिश्च' इति ङीन् । युवतिमिति । 'तद्धिता ' इत्यापञ्चमाध्यायमधिकृत्य 'यूनस्ति ' इति त्रिया ति ['सर्वतोऽक्तिन्नर्थादित्येके' इति ङीष् । ] रोरुदेति । यङन्तादप्रत्यये यलोप ॥

य. साधु मन्त्रैरुपतिष्ठते हरिं तद्भावपूतानपि वोपतिष्ठते ।

चित्ते तदीये ह्युपतिष्ठते क्षमा सैतादृशस्योत्तपते कथं पुनः ॥ ५० ॥

यो मन्त्रै करणै हरिं साधु उपतिष्ठते पूजयति अपि वा तद्भावपूतान् विष्णुभक्त्या शुद्धात्मन उपतिष्ठते तैर्मैत्रीं करोति । तदीये चित्ते हि क्षमा उपतिष्ठते सनिधत्ते । सा क्षमा एतादृशस्य दुष्टस्य चित्ते कथ पुनरुत्तपते प्रकाशते ॥—हरिमुपतिष्ठत इति । 'उपान्मन्त्रकरणे' । उपतिष्ठते । 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वक्तव्यम्' इति तङ् । उपतिष्ठत इति 'अकर्मकाच्च' इति तङ् । उत्तपत इति 'उद्विभ्यां तप.' इति तङ् ॥

अपत्यमस्या भवते समस्तमप्यदायि राजन्ननुगृह्यतामियम् ।
भवाव्यथी दीव्य पुरीह दीव्यता जनेन मा क्लाम्य यसार्थसाधने ॥५५॥

हे राजन्, अस्या समस्तमप्यपत्यं भवते अदायि दत्तम् । इयमनुगृह्यताम् । त्वं अव्यथी अव्ययनशील भव । इह पुरि मधुराया दीव्यता दिवीवाचरता जनेन सह दीव्य शोभस्व । मा क्लाम्य । अर्थसाधने यस यत्नं कुरु ॥—अदायीति । 'चिण् भावकर्मणो' इति तशब्दे च्लेश्चिण् । अनुगृह्यतामिति । 'सार्वधातुके यक्' इति यक् । भवेति । 'कर्तरि शप्' इति शप् । दीव्येति । 'दिवादिभ्य. श्यन्' । क्लाम्यति । वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलष ' इति श्यन् । यसेति 'यसु प्रयत्ने' 'यसोऽनुपसर्गात्' इति श्यन्विकल्प । दीव्यतेति । 'अधिकरणाच्चेति वक्तव्यम्' इति आचारे क्यच् ॥

संयस्यत: साधुहिते भियं निजामाधुन्वतीमानकदुन्दुभेर्गिरम् ।
शृण्वन्नृपस्तत्क्षणमक्ष्णुवन्मद: सोऽमित्यवक्प्रोज्झितजामिधिप्सकः॥५६॥

आनकदुन्दुभे. गिर शृण्वन् स नृप तत्क्षण अविलम्बेन ओं तथास्तु इत्यवक् उक्तवान् । साधुहिते सयस्यत यतमानस्य । निजा भिय आधुन्वतीं कम्पयन्तीम् । अक्ष्णुवन्मद व्याप्नुवन्मदो यस्य । प्रोज्झितजामिधिप्सक प्रोज्झिता जाम्या. स्वसु धिप्सा हिंसेच्छा येन ॥—संयस्यत इति । 'सयसश्च' इति । वा श्यन् । आधुन्वतीमिति । 'धूञ् कम्पने' 'स्वादिभ्य. श्नु' । शृण्वन्निति । 'श्रुव शृ च' इति श्नु शृ इत्यादेशश्च । अक्ष्णुवन्मद इति । 'अक्षू व्याप्तौ' । 'अक्षोऽन्यतरस्याम्' इति श्नु । सोऽमिति । 'सोऽचि लोपे चेत्पादपूरणम्' इति सुलोप । 'ओमाङोश्च' इति पररूपत्वम् । साधुहित इति । 'हितयोगे चतुर्थी वक्तव्या' । 'चतुर्थी तदर्था–' इति समास । 'जामि स्वसृकुलस्त्रियो' ॥

भिन्द्युर्गिरीनप्यधिकुर्वते च ये जगन्ति रुन्धन्त्यपि मण्डलं दिशाम् ।
दर्पं बलारेरपि तक्ष्णुवन्त्यलं प्रकुर्वते यान्सदराः सुरा अपि ॥५७॥
धिन्वन्ति ये बन्धुजनं तुदन्ति ये शोच्यान्कथं भव्यदृशो भवादृश. ।
स्तुत्वेति कंसं व्यतनोदथो मतिं गन्तुं सुषामानकदुन्दुभिर्गृहान्॥५८॥

द्वयोरन्वय । अथो आनकदुन्दुभि कंस इति स्तुत्वा गृहान् गन्तु मतिं व्यतनोत् । सुषामा शोभनं सान्त्ववचन यस्य । कथं स्तुत्वा । ये गिरीनपि भिन्द्यु., ये च जगन्ति अधिकुर्वते अभिभवन्ति, दिशा मण्डलमपि रुन्धन्ति, बलारेरपि दर्पं अलं तक्ष्णुवन्ति तनूकुर्वन्ति यान् सुरा सदरा सभया प्रकुर्वते सेवन्ते, बन्धुजनं धिन्वन्ति प्रीणयन्ति, ते भवादृश. त्वादृश कथ शोच्यान् अस्मादृशान् तुदन्ति व्यथयन्ति । भव्यदृश कुशलमेव पश्यन्त ॥—प्रकुर्वत इति । 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञ ' इति सेवने तङ् । अधिकुर्वत इति । 'अधे प्रसहने' इति अभिभवे तङ् । प्रसह-

१ 'दीव्यतीति दीर्घस्तु प्राच प्रामादिक ' इति नामधातुप्रक्रियाया सिद्धान्तकौमुदी.

कूपीन् आनर्च । गुणसंपदा स्वं पर्यष्करोत् अलङ्कृतवांश्च । गवेन्द्रे गवामिन्द्रे कृष्णे मतिं विदधे च । कीर्तिभरेण द्युलोकमपि स्कुन्वन् आवृण्वन् ॥—[स्कुन्वन्निति ।] 'स्कुञ् आवरणे' । 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च' इति श्नु । गवेन्द्र इति । 'इन्द्रे च नित्यम्' इत्यवङादेशः । महत्कूपीन् इति । 'आन्महत –'इत्यात्वे 'ऋत्यकः' इति प्रकृतिवद्भावो ह्रस्वश्च । द्युलोकमिति । 'दिव उत्' इति वस्य उकारः । एष तामिति । 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इति सुलोपः । सैष इति । 'सोऽचि–' इति सुलोपः । पर्यष्करोदिति । 'सुट् कात्पूर्वः' इत्यधिकृत्य 'सपर्युपेभ्यः करोतौ भूषणे' 'अडभ्यासव्यवायेऽपि' इति सुट् । 'सिवादीनाम्–' इति वा षत्वम्(?) । अन्वरुध्यतेति । 'अनो रुध कामे' इति रुधेर्दिवादित्वमात्मनेपदित्वं च ॥

पैतृष्वस्रीयाश्च मातृष्वसेया' कुल्याः स्वस्रीयाश्च काल्याणिनेयाः ।
ये भ्रातृव्या ये श्वशुर्याः कुलीनाः कौ[र]व्या ये चापि माहाकुलीनाः ६७
ये वा गर्गा ये च दासेरदेश्यास्ताक्षण्याद्या ये पुनर्दौष्कुलेयाः ।
सर्वाञ्छौरिर्वृत्तसर्वागमस्तानार्चीदुच्चैर्दैष्टिकोऽनुप्रधानम् ॥ ६८ ॥

द्वयोरन्वयः । शौरिस्तान् सर्वान् अनुप्रधानं प्रधानानुपूर्व्येण उच्चैः आर्चीत्पूजितवान् । ये कुल्याः कुलापत्यानि । पैतृष्वस्रीयाः पितुः स्वसुरपत्यानि । कुलशब्देन भेदात् कुल्य उच्यते । मातृष्वसेया मातृष्वसुरपत्यानि । स्वस्रीयाश्च स्वसुरपत्यानि च । काल्याणिनेया कल्याणीनामपत्यानि च । भ्रातृव्या भ्रातृणामपत्यानि च । ये च कुलीनाः कुलापत्यानि च श्वशुर्याः श्वशुरापत्यानि । ये च माहाकुलीनाः महाकुलापत्यानि च कौरव्या ये वा गर्गाः कुत्सितानि गर्गापत्यानि । ये च दासेरदेश्या दासीपुत्रप्रायाः । ये पुनः दौष्कुलेयाः दुष्कुलापत्यानि । ताक्षण्याद्याः तक्षापत्यप्रभृतयः । तान् । वृत्तसर्वागमः । वृत्तमधीतम् । दैष्टिको दिष्टमस्तीति मत्या युक्तः ॥—पैतृष्वस्रीया इति । 'पितृष्वसुश्छण्' इत्यपत्यार्थे छण् प्रत्ययः । मातृष्वसेया । 'मातृष्वसुश्च' इति । 'ढकि लोपः' । इति लोपोऽयम् । कुल्या इति । 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' इति यत् । स्वस्रीया इति 'स्वसुश्छः' । काल्याणिनेया इति । 'कल्याण्यादीनामिनङ्' इति ढक् । इनङादेशश्च । भ्रातृव्या इति । 'भ्रातुर्व्यच्च' । श्वशुर्या इति । 'राजश्वशुराद्यत्' कुलीना इति । 'कुलात्खः' । कौरव्येति । 'कुर्वादिभ्यो ण्यः' इति ण्यः । ('कुरुनादिभ्यो ण्यः')इति ण्यप्रत्ययोऽन्योऽपि तद्राजसंज्ञोऽस्ति । तस्य बहुषु लुक् । अयं तु श्रूयत एव । माहाकुलीना इति । 'महाकुलादञ्खञौ' । गर्गा इति । 'गोत्रस्त्रियाः कुत्सने ण च' । गोत्राभिधायिनः शब्दाण्णढकौ । दासेरेति । 'क्षुद्राभ्यो वा' इति ढ्रक् । ताक्षण्येति । 'सेनान्तलक्षणकारिभ्यश्च' इति ण्यः । कारिणः कारवः । दौष्कुलेया इति । 'दुष्कुलाड्ढक्' । वृत्तेति । 'णेरध्ययने वृत्तम्' । दैष्टिकेति । 'अस्तिनास्तिदिष्टं मतिः' । अनुप्रधानमिति आनुपूर्व्येऽव्ययीभावः ॥

पुषाण धर्मं न तपांसि तप्था मा वत्स चेतश्च विधेहि कृष्णे ।
य ईदृगस्मै नमते स्वयं द्रागभीष्टमुक्त्वैवमहास्त गर्गः ॥ ६९ ॥

अथो सा देवकी कृष्णाङ्घ्रिभक्ते उपचस्करे स्वत सतीं ता सातिशयामकरोत् । काषायपटान् भिक्षून् अभजत्सेवत च । कषायेण रक्त काषायम् कर्तव्यमात्रे कर्तव्ये कृत्स्ने पटिमान वैदग्ध्यम् । आटीत् प्राप्ता । लाक्षिकपाणिपादा लाक्षया रक्तं पाणिपाद यस्या तत्सदृशं वा उपमानाद्भविष्यतीति व्युक्तम् (?)॥—उपचस्करे इति । प्रतियत्ने तङ् । 'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु' इति सुट् । सतो गुणान्तराधान प्रतियत्न । 'ऋतश्च सयोगादेर्गुण ' इत्यत्र 'सयोगोपधग्रहण कृञर्थम्' इति गुण । 'कृञ प्रतियत्ने' इति कर्मणि षष्ठी । कर्तव्येति । 'धातो ' इत्या तृतीयाध्यायसमाप्तेरधिकार । 'तत्रोपपद सप्तमीस्थम्' इति सप्तम्यन्तस्योपपदसज्ञा 'कृदतिङ्' इति तिङ्व्यतिरिक्ताना प्रत्ययाना कृत्सज्ञा । 'वासरूपोऽस्त्रियाम्' इति त्र्यधिकारविहितप्रत्ययवर्जमसमानरूपस्यापवादप्रत्ययस्य वोत्सर्गबाधकत्वम् । 'कृत्या' प्राङ्ण्वुल ' इति कृत्यसज्ञा । 'डुकृञ् करणे' । 'तव्यत्तव्यानीयर ' इति तव्यत् । तव्यो वा स्वरे भेद । काषायेति । 'तेन रक्त रागात्' इत्यण् । शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थ । लाक्षिकेति । 'लाक्षारोचनाशकलकर्दमाट्ठक्' ॥

व्यनेष्ट लोभं विभवं विनिन्ये प्रत्यष्किरत्नो मनसापि किंचित् ।
सापन्नसत्त्वा च बभूव काले महोपसर्येव विशेषदृश्या ॥ २ ॥

सा लोभं व्यनेष्ट विशमितवती । विभवं धन विनिन्ये । धर्मार्थे विनियुक्तवती किंचित्प्राणिजात मनसापि नो प्रत्यष्किरत् हिंसितवती । उचिते काले आपन्नसत्त्वा गर्भिणी च बभूव । उपसर्या प्रथमगर्भग्रहणे प्राप्तकाला महागौरीव विशेषदृश्या विशेषदर्शनीया ॥—विनिन्ये इति । 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु निय ' इति व्यये आत्मनेपदम् । व्यनेष्टेति । 'कर्तृस्थे चाशरीरे कर्मणि' इति तङ् । उपसर्येति । 'उपसर्या काल्या प्रजने' इति निपातनाद्यत् । दृश्येति । 'ऋदुपधाच्चाक्लृपिचृते ' इति क्यप् । प्रत्यष्किरदिति । 'कॄ विक्षेपे' । 'हिंसाया प्रतेश्च' इति सुट् ॥

पश्यन्पतिस्तामनुमेयगर्भामर्यो बुधानामनवद्यचर्य. ।
प्रजा न लभ्येति निजा प्रतिज्ञा स्मरन्नसावार्तिमगादसह्याम् ॥ ३ ॥

अनुमेयगर्भां ता पश्यन् असौ पति वसुदेव प्रजा न लभ्या इति असह्या आर्तिं अगात् । निजा प्रतिज्ञा स्मरन् । बुधाना अर्य प्रधानभूत । अनवद्यचर्य । अवद्यं दोष । चर्या व्यापार ॥—अनुमेयेति । 'अचो यत्' । लभ्येति । 'पोरदुपधात्' इति यत् । असह्यामिति । 'शकिसहोश्च' इति यत् । चर्येति । 'गदमदचरयमश्चानुपसर्गे' इति यत् । अवद्येति । 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' इति यन्निपात्यते । अर्य इति । 'अर्यः स्वामिवैश्ययो ' इति यन्निपात्यते ॥

वह्यं शुचामाकलयन्नथ स्वं धर्म्ये पुरोपक्रमते स मार्गे ।
अचायदप्याक्रममाणमर्कमक्रंस्त कृष्णापचितौ विशिष्य ॥ ४ ॥

अथ स धर्म्ये यशाध्यपेते मार्गे उपक्रमते पुरा अप्रतिबन्धेनागच्छत । आक्रममार्यं उ धर्म्यं धर्मं अध्यायत् पुथितनाथ । आविसस्य सदा पूजाम्' इति स्मृतिः । कृष्णाप चितौ विष्णुपूजायां विक्षिप्य अर्कत्व उत्सेहे । स्वं आत्मान मुक्तो बद्ध शासनकरणभूत आकलयन् निश्चिन्वन् ॥—अकस्त इति । 'इतिसर्गतायनेषु कम' इति धर्मे तद् । सर्व तस्माद् । उपक्रमते इति । उपपराभ्याम्' इति वृत्ता तद् । वृत्तिप्रतिबन्ध । आक्रममाणमिति । आङ उद्गमने' इति तद् । ज्योतिरुद्गमन इति वक्तव्यम् । बद्ध मिति । बद्ध करणम्' इति मत ॥

प्रच्छायकारस्करमस्कराढ्ये मेध्ये कृतापस्किरणैररण्ये ।
मुदास्पदे शुम्भति विष्किरौघैरगोष्पदे सत्त्वमबोधि गर्भे ॥ ५ ॥

अरण्ये सन् वर्तमानः मग तत् गर्भोत्पत्तिलक्षणं वस्तु अबोधि ज्ञातवान् । प्रच्छाय कारस्करमस्कराढ्ये प्रकृष्टच्छायैः कारस्करैः मस्करैः वेणुभिश्च समृद्धे । मेध्ये शुद्धे । कृतापस्किरणे विष्किराणां पक्षिसमूहे शुम्भति शोभमाने । मुदास्पदे मुदस्स स्थान भूते । अगोष्पदे महत्त्वात् ।गोभिरगम्ये॥—कृतापस्किरणमिति । 'कॄ विक्षेपे । अपाच्चतुष्पाच्छकुनिष्वालेखने । इ(ति) अपस्किरणमकरवेष्विति वक्तव्यम्' इति जीवि कार्ये सुट् । गोष्पदमिति । 'गोष्पदं सेवितासेवितप्रमाणेषु' इति असेविते सुट् । मुदा स्पदमिति । आस्पदं प्रतिष्ठायाम्' इति सुट् । विष्किरेति । 'विष्किरः शकुनिर्विकिरो वा' इति विपूर्वात् किरतेः शकुनय शब्दीकिरः कः इति कप्रत्यये सुट् निपात्यते । मस्करेति । मस्करमस्करिणौ वेणुपरिव्राजकयो इति सुट् । कारस्करेति । कारस्करो वृक्षः इति सुट् । अबोधीति दीपजन- इत्यादिना कर्तरि चिण् ॥

कयाशुभीयादिमसूक्तविद्याविचक्षणश्मामुरतः पदात्स्वात् ।
परस्पराक्षस्वसुखस्य मार्गाद्द्वारेण निर्याय स माधुरेण ॥ ६ ॥
यक्षोद्रकुस्तुम्बुरुपायसादीनाश्चर्यवित्प्राभृतिकान्सरम्भाम् ।
विच्छायतो जीवधिकानगच्छद्घासान्विचारयन्नपरस्परान्सः ॥ ७ ॥

सः स्वात् पदात् माथुरेण मथुरामभिनिष्क्रमता द्वारेण निर्याय अपरस्परान् विच्छा यतः संततमविच्छेदेन गच्छत घासान् विचारयन् पश्यन् ॥ [अ]गच्छत् इ । कयाशुभीयादिमसूक्तविद्याविचक्षणश्मामुरतः । कयाशुभीयं आदिम आद्यं सर्व येषां तानि सूक्तानि एव विद्या तस्यां विचक्षणा श्मामुरा यस्मिन् । परस्पराक्षस्वसुखस्य मार्गात् परस्परं अक्षय्यं अहिंसनीयं अहिंसक वा सुखस्य सुतरां प्रशंसनीय मार्गं मृगया मुखो यत्र । यक्षोद्रकुस्तुम्बुरुपायसादीन् क्षीरं मधु, कुस्तुम्बुरु धान्यकम् । आश्चर्यवि भान् विस्मो गमनम् । जीविकान् कर्मेण जीवत । सरम्भान् रम्भो वैणवो दण्डः । जीवधिकान् जीवधेन यथाहारेण जीवत ॥—घासेति । घसु हिंसायाम्' । 'तरि

१ कयाशुभीयेति पुस्तकस्थपाठः काशिकायां तु कयाशुभीय इति

शसिचतियतिजनीनामुपसंख्यानम्' इति यत् । सुशस्येति । 'शंसिदुहिगुहिभ्यो वेति वक्तव्यम्' इति क्यप् । 'अनिदिता-' इति नलोप. । कुस्तुम्बुरु इति । 'कुस्तुम्बुरूणि जाति ' इति सुट् । अपरस्परानिति । 'अपरस्पराः क्रियासातत्ये' इति सुट् । आश्चर्येति । 'चरेराङि चागुरौ' इति यप्रत्यये 'आचर्यः' । 'आश्चर्यमनित्ये' इति सुट् निपात्यते । कयाशुभीयमिति । 'मतौ छ. सूक्तसाम्नो ' इति मत्वर्थे छ । आदिमेति 'आदेश्चेति वक्तव्यम्' इति म । माधुरेणेति । मधुरामभिनिष्क्रामति । 'अभिनिष्क्रामति द्वारम्' इत्यण् । मधुरामभिनिष्क्रामतीत्यत्र द्वार करण स्वातन्त्र्येण विवक्ष्यते । क्षौद्रेति । क्षुद्राभ्रमरवटरपादपादञ्' तेन कृते सज्ञायाम् । वीवधिकानिति । 'विभाषा विवधवीवधात्' इति ष्ठन् । तेन जीवतीत्यर्थे । विश्नेति । 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति नङि 'च्छो शूट् -' इति श । 'शात्' इति चुत्वाभाव । क्रयिकानिति । 'वस्नक्रयविक्रयाट्ठन्' तेन जीवतीत्यर्थे । राम्भेति । रम्भशब्देन वंशो बोध्यते ततोऽण् । विचक्षणेति । 'चक्षिङः ख्याञ्' इत्यत्र 'असनयोश्च प्रतिषेधो वक्तव्य ' इति ख्याञभाव ॥

दर्पोल्लसद्विक्रममाणवाहां स्वपस्कराकाक्षसुरथ्यरथ्याम् ।
व्यवस्करामेत्य पुरीमवोचच्छौरिं हरिश्चन्द्रसदक्षमेवम् ॥ ८ ॥

स गर्ग पुरीं मथुरामेत्य शौरिं वसुदेवं एवं अवोचत् । दर्पोल्लसद्विक्रममाणवाहा विक्रममाणाश्चरन्तो वाहा अश्वा यस्याम् । स्वपस्कराकाक्षसुरथ्यरथ्याम् स्वपस्करा शोभमानरथाङ्गयुक्ता अकाक्षा कुत्सिताक्षरहिता सुरथ्या शोभनै रथ्यै रथ वहद्भिरश्वैर्युक्ता रथ्या रथसमूहो यस्याम् । व्यवस्करा पुरीषाद्यमेध्यरहिताम् । हरिश्चन्द्रसदक्षम् ॥—विक्रममाणेति 'वे. पादविहरणे' इति तङ् । व्यवस्करेति । 'वर्चस्केऽवस्कर ' इति सुट् । स्वपस्करेति । 'अपस्करो रथाङ्गम्' इति सुट् । हरिश्चन्द्रेति । 'प्रस्कण्वहरिश्चन्द्रावृषी' इति सुट् । काक्षेति । 'का पथ्यक्षयो ' इति को कादेश ॥

बृहस्पतौ वत्स धियोप यस्त्व कृत्ये स नोपक्रमसे किमर्थम् ।
पुष्योऽद्य नः पुंसवनस्य काल. प्राप्तश्च पौषेऽहनि तद्विधेयम् ॥ ९ ॥

रे वत्स, य धिया बृहस्पतौ उप सुराचार्यादधिक स त्व किमर्थं कृत्ये वस्तुनि विषये न उपक्रमसे आरभसे । अद्य पुष्य न. पुसवनस्य काल प्राप्तश्च । तत् पौषे पुष्ययुक्तचन्द्रयुक्ते अहनि तत् विधेयम् ॥—उपक्रमस इति । 'प्रोपाभ्या समर्थाभ्याम्' इति तङ् । पुष्ये इति । 'पुष्यसिद्ध्यौ नक्षत्रे' इति क्यप् । 'नक्षत्रेण युक्त काल ' इत्यण् । 'यस्येति च' इत्यलोप । 'पुष्यतिष्ययोर्नक्षत्राणि यलोपो वक्तव्य ' । पुष्य इति । 'लुबविशेषे' इत्यणो लुप् । 'लुपि युक्तवद्व्यक्तिवचने' । कृत्ये इति । 'विभाषा कृवृषो ' इति क्यप् । बृहस्पताविति । 'पारस्करप्रभृतीनि च सज्ञायाम्' 'तद्बृहतो करपत्योश्चोरदेवतयो सुट् तलोपश्च' । बृहन्तो देवा.। उपेति । 'उपोऽधिके च' इति कर्मप्रवचनीयत्वे 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी'॥

स्तोकात्प्ररुष्टोऽपि कर्षन्नवध्यान्यो यातुधर्मा क्रमते मुमूर्षन् ।
कंसः क्रियाणां सहसाकृतानां फलानि भोक्ता स पचेलिमानि ॥१०॥

दशनमुपमम् । अस्मात् पचाद्यच् । असमन्तितेति । ६२ अति ६३ अदि बन्धने । अन्तेः कर्मणि क्त । अन्दुकेति । 'अन्दूदृम्भूकफेल्लुकर्कन्धूदिधिषू' इत्यूप्रत्ययान्ता अन्देः स्वार्थे कनि । 'केऽण' इति ह्रस्व । इन्द्रेति । ६४ इदि परमैश्वर्ये । अस्माद् 'ऋज्रेन्द्र—'इत्यादिना निपातितो रन् । बिन्दुरिति । ६५ बिदि अवयवे । बाहुलकादुप्रत्यय ॥

मनोज्ञगण्डं तमनिन्दितानन्दं नन्दात्मजं शारदचन्द्रशीतलम् ।

पराक्रमत्रन्दनकन्दितासुरं संक्रन्दनक्रन्दितमीक्षितास्महे ॥ १० ॥

वय तं नन्दात्मजमीक्षितास्महे द्रक्ष्याम । तद्दिवसे एव भगवद्दर्शनानिश्चयात् लुटप्रयोग । मनोज्ञगण्डमित्यादीनि त्रीणि विशेषणानि स्पष्टानि । पराक्रमत्रन्दनकन्दितासुरं पराक्रमरूपेण त्रन्दनेन चेष्टया कन्दिता रोदिता असुरा येन तम् । सक्रन्दनक्रन्दितमिन्द्रेण बहुकृत्व स्वरक्षणार्थमाहूतम् ॥—गण्डम् । ६६ गडि वदनैकदेशे । अस्मात् पचाद्यच् । वदनैकदेश इति तदारम्भक्रियोक्ता । अनिन्दितेति । ६७ णिदि कुत्सायाम् । कर्मणि क्त । नन्देति । ६८ टुनदि समृद्धौ । समृद्धिर्हर्षे पर्यवस्यति । पचाद्यच् । चन्द्रेति । ६९ चदि आह्लादे दीप्तौ च । 'स्फायि-तञ्चि-वञ्चि-शकि-क्षिपि-क्षुदि-सृपि-तृपि-दृपि-वन्दि-उन्दि-श्विति-वृति-अजि-नी-पदि-मदि-मुद-खिदि-छिदि-भिदि-मन्दि-चन्दि-दहि-दसि-दम्भि-वसि-वाशि शीङ् हसि-सिधि-शुभिभ्यो रक् इति रक् । त्रन्देति । ७० त्रदि चेष्टायाम् । ल्युट् । कन्दितेति । ७१ कदि ७२ क्रदि ७३ क्लदि आह्वाने रोदने च । कन्देर्णिजन्तात् क्त । संक्रन्दनेति । 'समि-क्रन्दि-क्रुषि-हृदिभ्य' इति नन्द्यादिपाठाल्ल्युट् । क्रन्दितमिति । क्रन्दे कर्मणि क्त ॥

अक्लिन्दनीयाञ्शुधितात्मनो जनान्प्रशीकते यः करुणावलोकनैः ।

तमुत्तमश्लोकमवेक्ष्य तत्स्तुतिद्रेकैरुपध्रेकयितास्मि दिक्तटम् ॥ ११ ॥

य करुणावलोकै शुधितात्मनो जनान् प्रशीकते । शुधित शुद्ध आत्मा मनो येषा तान् प्रशीकते नितरा सिञ्चति । अक्लिन्दनीयान् परिदेवयितुमनर्हान् । अहं तमुत्तमश्लोकमवेक्ष्य तत्स्तुतिद्रेकैर्दिक्तटमुपध्रेकयितास्मि तत्स्तुतिद्रेकैस्तस्य स्तुतिरूपैर्द्रेकै शब्दैरुपध्रेकयितास्मि शब्दयिष्यामि ॥—अक्लिन्दनीयानिति । ७४ क्लिदि परिदेवने । अस्माण्णिजन्तादनीयर् । शुधितेति । ७५ शुन्ध शुद्धौ । अस्मात् कर्तरि क्त । 'अनिदिताम्' इति नकारस्य लोप । अतादय उदात्ता उदात्तेत । प्रशीकत इति । ७६ शीकृ सेचने । एतदादय श्लाघ्यन्ता उदात्ता अनुदात्तेत । अस्माल्लट् । आत्मनेपदारम्भसूचकस्तशब्द । अवलोकनैरिति । ७७ लोकृ दर्शने । ल्युट् । उत्तमश्लोकमिति । ७८ श्लोकृ संघाते । स च ग्रन्थनम् । तच्च कर्मगत कर्तृगत वा । अस्मात् कर्मणि घञ् । द्रेकैरिति । ७९ द्रेकृ ८० ध्रेकृ शब्दोत्साहयो । शब्दोत्साह इत्येके । उत्साहो वृद्धिरौद्धत्यं वा । द्रेकेर्घञ् । उपध्रेकयितास्मि । ध्रेकेर्लुट् ॥

अवस्कि रोहिद्भिरमस्कि विष्किरैरटेकि गोधाभिरटीकि पन्नगैः ।
अरङ्घि कोलैर्लघु तद्रथस्वनात्प्रबुध्य सिंहैः पुनरङ्घितं तदा ॥ १५ ॥

तद्रथस्वनात् रोहिद्भिरवस्कि धावितम् । विष्किरैरमस्कि पक्षिभिरुद्गतम् । गोधाभिरटेकि गतम् । पन्नगैरटीकि अपसृतम् । कोलैर्लघु अरङ्घि शीघ्रं गतम् । सिंहैः पुनः प्रबुध्य तदा अङ्घितम् । अन्येषां गतिराक्षिप्ता निन्दिता वा ॥—अवस्कि, अमस्कि, अटेकि, अटीकि, अरङ्घि । वस्कादीनां पञ्चानां भावे लुङि चिण् । लघ्विति । 'रङ्घिलङ्घ्योर्नलोपश्च' इत्युप्रत्ययः । अङ्घितम् । ११० अघि १११ वघि ११२ मघि गत्याक्षेपे । गतौ गमनारम्भे चैके । कैतवे च । अङ्घेः साध्ये भावे क्तः ॥

प्रवङ्घमानस्य च तस्य सत्वरं विमङ्घनस्याधिकराधितात्मनः ।
निकाममुल्लाघतनोः समत्यगात्प्रद्राघिता श्लाघ्यगुणस्य वर्तनी ॥ १६ ॥

सत्वरं प्रवङ्घमानस्य तस्य प्रद्राघिता वर्तनी समत्यगात् च । प्रवङ्घमानस्य सम्यग्गच्छतः प्रद्राघिता अत्यर्थमायता समत्यगात् अतिक्रान्ता । विमङ्घनस्य विगतं कैतवं यस्य तस्य । अधिकराधितात्मनोऽधिकं राघितः समर्थ आत्मा मनो यस्य तस्य । निकाममुल्लाघतनोः उल्लाघा निर्गतरोगा तनुर्यस्य तस्य ॥—प्रवङ्घमानस्येति । वङ्घेः शानच् । विमङ्घनस्य । मङ्घेर्ल्युट् । राघितेति । ११३ राघृ ११४ लाघृ ११५ द्राघृ सामर्थ्ये । दाघृ आयामे चास च दैर्घ्ये क्रियासमर्थन वा । राघेः कर्तरि क्तः । उल्लाघेति । 'अनुपसर्गात्फुल्लक्षीव–' इति लाघेर्निपातितः । प्रद्राघितेति । द्राघेः कर्तरि क्तः । श्लाघ्येति । ११६ श्लाघृ कत्थने । अस्मात् कर्मणि ण्यत् । शीकादय उदात्ता अनुदात्तेतः ॥

अफक्कतातर्क्यगुणेन तङ्कता खलश्ववुक्कापरुषे पुरेऽमुना ।
फेनैः कखन्तीमिव तां कलिन्दजां संतीर्य वृन्दावनमैक्ष्यनोखितम् ॥ १७ ॥

अफक्कता अमुना तां कलिन्दजां सतीर्य वृन्दावनमैक्षि । अफक्कता मन्दगमनमसद्व्यापारं वा कुर्वता । अतर्क्यगुणेन । अतर्क्या अपरिहसनीया गुणा यस्य तेन । खलश्ववुक्कापरुषे पुरे तङ्कता । खला एव श्वानस्तेषां वुक्काभिर्भषणैः परुषे पुरे तङ्कता कृच्छ्रेण जीवता । कीदृशीं कलिन्दजामित्यत्राह—फेनैः कखन्तीं हसन्तीमिव । कीदृशं वृन्दावनमित्यत्राह—अनोखितं कचिदप्यशुष्कम् ॥—अफक्कतेति । ११७ फक्क नीचैर्गतौ । शिङ्घन्ता उदात्ता उदात्तेतः । नीचैर्गतिर्मन्दगमनमसद्व्यापारो वा । अस्मात् परस्मैपदारम्भद्योतकः शता । अतर्क्येति । ११८ तक हसने । अस्मात् कर्मणि 'तकिशसिचतियतिजनीनां यद्वाच्य' इति यत् । तङ्कता । ११९ 'तकि कृच्छ्रजीवने' । शता वुक्केति । १२० वुक्क भषणे । भषणं श्वरवः । 'गुरोश्च हलः' इत्यप्रत्ययः । १२१ कख हसने । शत्रन्तान्ङीप् । अनोखितम् । १२२ ओखृ १२३ राखृ १२४ लाखृ १२५ दाखृ १२६ धाखृ शोषणालमर्थयोः । ओखेः कर्तरि क्तः ॥

भिस्त्वङ्गित व्याप्तम् ॥—एखदिति । इखेः शता । इङ्खितम् । इङ्खे कर्मणि क्त । प्रेङ्खदिति । ईङ्खे शता । वल्गेनेति । वल्गेर्ल्युट् । रङ्गेति । रङ्गो गच्छन्त्यस्मिन् प्रेक्षकाणा मनासीति । 'हलश्च' इति सञ्ज्ञायामधिकरणे घञ् । अङ्गे प्राप्रोत्सवयवानित्यङ्गम् । प्राग्वद् घञ् । अस्मात् 'अङ्गात् कल्याणे' इति पामादिपाठान्मत्वर्थीयो न । प्रवङ्गितमिति । वङ्गे कर्मणि क्त । मङ्गलेति । 'मङ्गेरलच्' इत्यलच् । तङ्गो कर्मणि क्त. ॥

त्वङ्गत्खगश्रङ्गितपक्षमारुतश्लङ्गद्रजोराजिभिरिङ्गिताम्बरम् ।
रिङ्गत्प्रियालिङ्गितमृङ्गसंगमत्वङ्गत्प्रसूनं रवितापयुङ्गितम् ॥ २१ ॥

त्वङ्गता दयमानाना खगाना श्रङ्गितैश्चलितै पक्षमारुतै श्लङ्गन्तीभी रजोराजिभिरिङ्गित व्याप्तमम्बर यस्मिंस्तत् । रिङ्गन्त्या चलन्त्या प्रिययालिङ्गिताना मृगाणा सगमेन त्वङ्गन्ति चलन्ति प्रसूनानि यस्मिंस्तत् । रवितापेन युङ्गित वर्जितम् ॥ त्वङ्गदिति । त्वङ्गेः शता । श्रङ्गे कर्तरि क्त । श्लङ्गे शता । इङ्गे कर्मणि क्त । रिङ्गदिति । रिङ्गे शता । आलिङ्गितेति । आङ्पूर्वत्वादाश्लेषार्थत्वम् । कर्मणि क्त । त्वङ्गदिति । त्वगि कम्पने । अस्माच्छता । युङ्गितमिति । १५७ **युगि** १५८ **जुगि** १५९ **वुगि** वर्जने । युङ्गेः कर्मणि क्त ॥

विजृङ्ग्य वुङ्ग्यं गुणसंघदङ्घका अलङ्घितानन्दरसात्तघर्घनाः ।
सुमङ्घिता. शिङ्घितपुष्पसौरभा यद्वर्चमानाः पशुपाः प्रसेचिरे ॥२२॥

पशुपा यत् प्रसेचिरे यत् वृन्दावनं प्रसेचिरे सम्यक् सेवितवन्त । कीदृशा इत्यत्राह—वुङ्ग्य विजृङ्ग्य गुणसघदङ्घका । वर्जनीय वर्जयित्वा गुणसघस्य दङ्घका· पालका । अलङ्घितस्य अशुष्कस्य परिपूर्णस्य आनन्दस्य रसेनास्वादनेनात्तं स्वीकृत घर्घनं हासो यैस्ते । सुष्ठु मङ्घिता· मण्डिता । शिङ्घित आघ्रात पुष्पाणा सौरभो यैस्ते ॥—विजृङ्ग्येति । जृङ्गेर्ल्यप् । वुङ्ग्यमिति । वुङ्गेर्ण्यत् । दङ्घका इति । 'दघि पालने त्यागे च द्रुमे' । अस्माण्ण्वुल् । अलङ्घितेति । 'लघि शोषणे' । कर्तरि क्त. । घर्घनेति । १६० **घर्घ**[1] हसने[2] । ल्युट् । सुमङ्घिता । १६१ **मघि** मण्डने । कर्तरि क्त । १६२ **शिघि** आघ्राणे । कर्मणि क्त । फक्कादय उदात्ता उदात्तेत । वर्तमाना इति । १६३ **वर्च दीप्तौ** ईजन्ता उदात्ता अनुदात्तेतः । अस्माच्छानच् । प्रसेचिरे । १६४ **षच** सेचने सेवनेऽपि । लिट् ॥

सुलोचना यत्र शचीसमप्रभा अशाश्चचुः श्वञ्चितसौरभाः कचे ।
सकञ्चुकाः काञ्चनकाञ्चिभूषिता व्रजाङ्गना निर्मचनेन नर्मणा ॥२३॥

यत्र व्रजाङ्गना निर्मचनेन नर्मणा अशाश्चचु । निर्मचनेन निर्गतं मचन शाठ्यं यस्मात् तेन । नर्मणा सह अशाश्चचु इतस्ततश्चरितवत्य· । कचे केशे श्वञ्चित व्याप्तं सौरभ यासा ता । सुलोचना इत्यादि विशेषणचतुष्कं स्पष्टम् ॥—सुलोचना । १६५ **लोचृ** दर्शने । करणे

१. स्वार्थणिचमाश्रित्य 'घाघना' इति पठनीयम्. २ धातुपाठे तु 'घघ हसने' इत्युपलभ्यते.

कौटिल्ये द्रव्यस्याल्पीभावे चेत्यर्थ. । 'गतिकौटिल्ययो' इति द्रुमे । कुचे कर्तरि क्त । क्रौञ्च इति । क्रुञ्चे 'ऋत्विग्दधृग्–' इत्यादिना क्विनि कुङ् । अस्मात् पुन प्रज्ञादित्वादण् । लुञ्चन् । १८८ लुञ्च अपनयने । शता । सम्यगिति । १८९ अञ्चु गतिपूजनयो । 'ऋत्विग्' इत्यादिना क्विन् । 'क्विन्प्रत्ययस्य कु' इति कुत्वम् ॥

आवक्रचञ्चूपुटतञ्चदारवत्वञ्चत्खगम्रुक्तशिखैर्लताद्रुमैः ।

अम्लुक्तरश्मौ शशिना निमुम्रुचे निमुम्लुचेऽर्केण च यत्र संततम् २६

यत्र शशिना निमुम्रुचे । अर्के (र्के)ण च निमुम्लुचे । उभयोरस्तमितमित्यर्थ. । कीदृशे वने । लताद्रुमैरम्लुक्तरश्मौ अप्रविष्टरश्मौ । कीदृशैर्लताद्रुमै । आवकचञ्चूपुटतञ्चदारवत्व-ञ्चत्खगम्रुक्तशिखै । ईषद्वक्रचञ्चूमध्यात् तञ्चता उद्गच्छता आरवेण शब्देन सह त्व-ञ्चद्भिर्गच्छद्भि खगैर्म्रुक्ता प्राप्ता शिखा अग्राणि येषा ते ॥—आवकेति । १९० वञ्चु १९१ चञ्चु १९२ तञ्चु १९३ त्वञ्चु १९४ म्रुञ्चु १९५ म्लुञ्चु १९६ म्रुचु १९७ म्लुचु गत्यर्था । वञ्चे 'स्फायितञ्चि–' इत्यादिना रकि नेलोपश्च । चञ्चू इति । चञ्चे 'पटिचटिचञ्चिभ्यश्च' इति भोजोक्त्या उप्रत्यय. । 'अप्राणिजातेश्च' इत्यूङ् । तञ्च-त्-त्वञ्चदिति । तञ्चे त्वञ्चेश्च शता । म्रुक्तेति । म्रुञ्चे कर्मणि क्त । अम्लुक्तेति । म्लुञ्चे कर्तरि क्त । निमुम्रुचे निमुम्लुचे । म्रुचिम्लुच्योर्भावे लिट् । निपूर्वत्वाच्चयोरस्तमयार्थत्वम् ॥

समम्रुचत्क्षीरमथाग्लुचद्धृतं चुकोज वासांसि चुखोज मानसम् ।

समग्लुचत्केलिषु सज्जमानधी. स यत्र गुञ्जन्मणिनूपुरो हरि. ॥२७॥

हरिर्यत्र क्षीर समम्रुचदचोरयत् ॥ अथ घृतं अग्लुचज्जहार । वासासि चुकोज हृत-वान् । मानसं चुखोज । व्र(व्र)जवासिना हृदयं लीलाभिरपहृतवानित्यर्थ । यत्र केलिषु स-ज्जमानधीर्गुञ्जन्मणिनूपुर स समग्लुचत् । सज्जमाना सनह्यन्ती धीर्यस्य स । गुञ्जन्तौ क्वणन्तौ मणिनूपुरौ यस्य सः । समग्लुचत् सचचार ॥—समम्रुचत् । १९८ म्रुचु १९९ ग्लुचु २०० कुजु २०१ खुजु स्तेयकरणे । म्रुचे 'जृस्तम्भु–' इत्यादिना लुङयङ् । अग्लुचत् । ग्लुचे प्राग्वदङ् । चुकोज चुखोज । कुजे खुजेश्च लिट् । समग्लुचत् । २०२ ग्लुञ्चु २०३ षस्ज गतौ । 'षचे' इत्यप्येके । षस्जेर्लक्षणया सनाहार्थता । ग्लुञ्चे-रटि नलोप । सज्जमानेति । 'यदभिप्रायेषु सज्जते' इति भाष्यप्रयोगादात्मनेपदम् । तेन शानच् । गुञ्जदिति । २०४ गुजि अव्यक्ते शब्दे । शता ॥

सुरार्चिते म्लेच्छजनैर्दुरासदे श्रीलच्छिताङ्गे सितपुष्पलाञ्छिते ।

यत्र स्थिते वाञ्छितदे हरिद्रुमे तदाञ्छितह्रीच्छनमास्त नन्दनम् ॥२८॥

१ 'चो कु' इत्येतद्दृष्ट्यास्यासिद्धतत्वेन 'चो कु.' इत्यस्योपन्यासो युक्त . २ 'नका-रजावनुस्वारपञ्चमौ झलि धातुषु । सकारज शकारश्च षाट्टवर्गस्तवर्गज. ॥' इत्यभियुक्तोक्त्या धातूना नकारोपधत्वात्.

ण्यसचयोऽर्जिततुकृतौघः । गभीरगर्जद्रथतर्जिताम्बुद. गभीर यथा तथा गर्जता शब्दायमानेन रथेन तर्जितो भर्त्सितोऽम्बुदो येन स ॥—प्रभ्रज्येति । भ्रजेर्ल्यप् । दृभ्रंश भृज्जेर्लिट् । ध्वजेति । ध्वजे पचाद्यच् । ध्वञ्जितेति । ध्वञ्जे. कर्तरि क्त । कूजदिति । २२४ कूज अव्यक्ते शब्दे । शता । स्वर्जेति । २२५ अर्ज २२६ षर्ज अर्जने । सुष्ठु अर्जते । अर्जेर्घञि वार्तिकमते न्यङ्क्वादित्वात् कुत्वम् । सर्जितेति । षर्जे. कर्मणि क्त । [ गर्जदिति ] । २२७ गर्ज शब्दे । मेघशब्दे द्रुमे । अस्माच्छता । तर्जितेति । २२८ तर्ज भर्त्सने । कर्मणि क्त ॥

अकर्जितोऽसौ हरिखर्जनोत्कधीरजत्पशुव्रातमजेन तेजितम् ।
लसत्खजाकं व्रजमासदत्क्रमादखञ्जितैरेजितचामरैर्हयैः ॥ ३१ ॥

असौ हयैः क्रमात् व्रजमासददपगतोऽभूत् । अकर्जितोऽभीतो दुःखरहितो निश्चलबुद्धिश्च । हरिखर्जनोत्कधीः । हरेः खर्जने पूजायामुत्का धीर्यस्य स । अजत्पशुव्रातमजन्तो गच्छन्तः पशुव्राता यस्मिंस्तत् । अजेन तेजितं पालितम् । लसत्खजाकं लसन्तः खजाका मन्थनदण्डा यस्मिंस्तत् । अखञ्जितैरपङ्गुभिः । एजितचामरैरेजिताः कम्पिताश्चामरा येषु तैः ॥—अकर्जित इति । २२९ कर्ज व्यथने । तच्च भयदुःख चलनं च अस्मात् कर्तरि क्त । खर्जनेति । २३० खर्ज पूजने । मार्जने च द्रुमे । ल्युट् । [ अजदिति ] । २३१ अज गतिक्षेपणयोः । शता । तेजितम् । २३२ तेज पालने । कर्मणि क्त । खजाकेति । २३३ खज मन्थे । 'खजेराक' इत्याकप्रत्यय । अखञ्जितैः । २३४ खजि गतिवैकल्ये । कर्तरि क्त. । एजितेति । २३५ एजृ कम्पने । कर्तरि क्त ॥

विस्फूर्जदक्षीणघनाघनोपमक्षीजा लजन्तस्त्रिदशानलाञ्जितान् ।
लाजादिहोतृष्वपि लञ्जनप्रदा यस्मिन्विनेशुर्जजनेषु दानवाः ॥ ३२ ॥

दानवा यस्मिन् जजनेषु विनेशुः । यस्मिन् व्रजे । जजनेषु युद्धेषु । कीदृशा इत्यत्राह—विस्फूर्जदक्षीणघनाघनोपमक्षीजाः । विस्फूर्जद्भिः स्तनयद्भिः, अक्षीणैः पूर्णैर्घनाघनैर्मेघैरुपमा यस्य तादृशः क्षीजोऽव्यक्तशब्दो येषां ते । अलाञ्जितान् कैरप्यभर्त्सितांस्त्रिदशाल्लजन्तो भर्त्सयन्तः । लाजादिहोतृष्वपि लञ्जनप्रदा भर्त्सनप्रदा ॥—विस्फूर्जदिति । २३६ टु ओ स्फूर्जा वज्रनिर्घोषे[1] । शता । अक्षीणेति । २३७ क्षि क्षये । कर्तरि क्त । 'निष्ठायामण्यदर्थे' इति दीर्घे 'क्षियो दीर्घात्' इति निष्ठानत्वम् । क्षीजेति । २३८ क्षीज अव्यक्ते शब्दे । घञ् । लजन्त इति । २३९ लज २४० लजि भर्त्सने । २४१ लाज २४२ लाजि भर्त्सने । भर्जने चेति लीलाशुकः । लजेः शता । अलाञ्जितान् । लाजेः कर्मणि क्त । लाजेति । लाजेः कर्मणि घञ् । लञ्जनेति । लञ्जेर्ल्युट् । जजनेषु २४३ जज २४४ जजि युद्धे । जजेर्ल्युट् ॥

1. 'व्रजनिष्पेषे' इति पाठः.

जहृषे जवात्तुजितवत्सकैरसौ घृणैरसुखैर्गजगर्जिभिर्वृतम् ।
गर्जत्खरं गृञ्जितधेनुमोमुचद्रसोत्करं मुखदं भजन्व्रजम् ॥ २३ ॥

असौ व्रजं जहृषे । भजन् प्राप्नुवन् । कीदृशं व्रजम् । वृषैर्वृतं व्याप्तम् । कीदृशैर्वृषैः । जवात्तुजितवत्सकैः जवया परस्परयुद्धेन तुजितानि पीडितानि वत्सकानि यैस्तैः । असुखैर्नरपामहिंसकैः । गजगर्जिभिर्गजा इव गर्ज्यमानैः । कीदृशं व्रजम् । गर्जन्तः खराः शब्दायमाना खरा यस्मिंस्तम् । गृञ्जितधेनुमोमुचद्रसोत्करं गृञ्जिता हुंकारवं कुर्वाणा धेनवो नवप्रसूता गावो यस्मिंस्तम् । मोमुचतः पुनः पुनः स्राव्यमाना च रसोत्करा यस्मिंस्तम् । मुखदं मुखान्तो भवन्तोऽव्याकुला यस्मिंस्तं च ॥—जवेति । घञे 'गुरोश्च— हल' इत्यकारः । तुजितेति । २४५ तुज हिंसायाम् । कर्मणि क्तः । भजुषे । २४६ तुजि पालने च । प्राणने च हुमे । अप् । गर्जेति । २४७ गज २४८ गजि २४९ गृज २५० गृजि २५१ मुज २५२ मुजि शब्दार्थाः । गज मदने च । मज मजि इत्यप्येके । शब्दायते गायति भैरवं गर्जेरन् । गर्जीति । घञे 'कर्तर्युपमाने' इति णिनिः । गर्जेतिति । गर्जेः शता । गृञ्जितेति । गृञ्जेः कर्तरि क्तः । मोमुचदिति । मुजे र्यङ्लुकि शता । मुखदिति मुजेः शता । भजन् । २५३ वज २५४ व्रज गतौ । वजे शता । व्रजे गोचरसंचर— इत्यादिना घः ॥

मार्गांस्स दृष्ट्वा हरिपादलाञ्छनान्व्यवेष्टयोर्व्या महनीयचेष्टितः ।
वल्केष्ठिसंगोष्टितकोटमानमहने महच्छ्रितपोस्फुटद्रुमे ॥ २४ ॥

मार्गात् स हरिपादलाञ्छनं दृष्ट्वोर्व्यां महनीयचेष्टितो व्यवेष्टत । मार्गात् मार्गनति क्रान्त्वान् । व्यवेष्टत विलुठितवान् । महनीयचेष्टितो महनीयं चेष्टितं व्यापारो यस्य सः । वने वल्केष्ठिसंगोष्टितकोटमानमहते । तस्य वनस्य चेष्टा संगोष्टितं संघातीकृतं कोटमिह-मप्यम्यम् । कीदृशे वने । महच्छ्रितपोस्फुटद्रुमे महच्छ्रिता वायुभिः कम्पिता । अत एव पोस्फुटतः अत्यर्थं स्फुटन्तो द्रुमा यस्मिंस्तस्मिन् ॥—मार्गादिति । २५५ मार्ग गति कम्पहिंसनयोः । धातूनां सर्वाता अनुदात्तेव । लोपश्चोपधो वाच्यम् । टोपधोऽपि द्रुमे । अस्मात् क्विपि संयोगान्तलोपः । व्यवेष्टत । २५६ वेष्ट वितुण्डने । अकर्मकः । लङ् । चेष्टितेति । २५७ चेष्ट चेष्टायाम् । अस्मात् स्थियमाणे क्तः । गोष्टितेति । २५८ गोष्ट २५९ लोष्ट संघाते । गोष्टेर्णिजन्तात् कर्मणि क्तः । कोटमिति । पचाद्यच् । घट्टितेति । २६० घट्ट चलने । कर्तरि क्तः । पोस्फुटदिति । २६१ स्फुट विकसने । यङ्लुगन्तात् शता ॥

मनन्तुमार्गेषु द्रुमाप्यनैव च प्रमन्त्रघोस्फुठित गोपिके हरौ ।
स पापमुन्मिमुषदेवमिरुन्मदैरनेडिता क्ष्मां पुनरप्यहिण्डत ॥ २५ ॥

॥ उन्मदैरमेडिता क्ष्मां पुनरप्यहिण्डत । उन्मदैरक्षुब्धमदैरनेडितामपीडितामहिण्डत।

गच्छत् । कीदृश. । कुमार्गेषु अनन्नगच्छन् । शुभाध्वना एव वन्नसहाय एव गच्छन् । सृशोत्कण्ठितगोपिके हरौ प्रमन् भृशमुत्कण्ठिता गोपिका यस्मिंस्तस्मिन् । सोत्कण्ठस्मृतिमान् । कीदृशेऽन्मदे । पापमुन्भिः पापस्य पालकै । बुधहेड्भि' बुधाना बाधकै ॥—अनन्निति । २६२ अठि गतौ । अस्मात् क्विपि सयोगान्तलोपे अन् । तस्मान्नञ्समासे नुट् । वन्निति । २६३ वठि एकचर्यायाम् । सा चासहायगमनम् । प्राग्वत् । क्विप् । प्रमन्निति । २६४ मठि २६५ कठि शोके । अत्र शोक. सोत्कण्ठस्मरणम् । उत्कण्ठामात्रे त्वकर्मक । मण्ठे प्राग्वत् क्विप् । सयोगान्तलोपश्च । उत्कण्ठितेति । कण्ठे कर्तरि क्त । पापमुन्भि । २६६ मुठि पालने । क्विप् । बुधहेड्भि । २६७ हेठ विबाधायाम् । २६८ एठ च । हेठे क्विप् । अनेठिताम् । एठे कर्मणि क्त । अहिण्डत । २६९ हिडि गत्यनादरयो लङ् ॥

> प्रहुण्डितानैक्षत चारुकुण्डलान्प्रवण्डितार्थानविमण्डिताशयान् ।
> स भण्डिलो भोजनृपालपिण्डमुक्प्रमुण्डितांस्तत्र जनानतुण्डकान् ३६॥

भण्डिल' स तत्र प्रहुण्डिताञनानैक्षत् । भण्डिलो दूत । प्रहुण्डितान् सघातीभूतान् । चारुकुण्डलान् चारूणि कुण्डलानि येषा तान् । प्रवण्डितार्थान् प्रवण्डिता सम्यक् विभक्ता अर्था पुरुषार्था धनानि वा येषा तान् । अविमण्डिताशयान् । अविमण्डितोऽविभक्त आशयो येषा तान् । एकमनस्कानित्यर्थ । प्रमुण्डितान् अत्यन्तशुद्धान् । अतुण्डकान् अहिंसकान् । पिण्डमन्नम् ॥—प्रहुण्डितानिति । २७० हुडि सघाते कर्तरि क्त । कुण्डलेति । २७१ कुडि दाहे । 'मृदिमण्डिकुण्डिकन्दिभ्योऽलच्' इत्यलच् । प्रवण्डितेति । २७२ वडि विभाजने । २७३ मडि च । द्वौ वेष्टनेऽपीत्येके । वण्डे कर्मणि क्त. । अविमण्डितेति । मण्डे कर्मणि क्त । भण्डिल इति । २७४ भडि परिभाषणे । तच्च परितो भाषणम् । सनिन्दवचनं वा । परिहास इत्येके । अस्मात् 'सलिकल्यनिभटिभण्डितण्डिभ्य इलच्' इतीलच् । पिण्डेति । २७५ पिडि सघाते । पचाद्यच् । प्रमुण्डितान् । २७६ मुडि मार्जने । शुद्धिन्यग्भावौ तत् । कर्तरि क्त । अतुण्डकान् । २७७ तुडि तोडने । दारण हिंसनं वा तत् । अस्माण् ण्वुल् ॥

> अभुण्डितोच्चण्डगतीनशण्डनान्कुमार्गवैतण्डिकपण्डितावृतान् ।
> स तानकण्डान्दधिखण्डनादिकस्वधर्मसक्तानगतहेडमानमत् ॥ ३७ ॥

स तान् गतहेडमानमत् । गतहेड गतावज्ञ यथा तथा नमस्कृतवान् । कीदृशान् । अभुण्डितोच्चण्डगतीन् अस्वीकृतक्रूरव्यापारान् । अशण्डनान् न शण्डन परिपीडा येषा तान् । कुमार्गवैतण्डिकपण्डितावृतान् असन्मार्गस्य वैतण्डिका खण्डनैकपरा ये पण्डितास्तैरावृतान् मिश्रान् । अकण्डान् मदरहितान् । दधिखण्डनादिकस्वधर्मसक्तान् दधिखण्डनादिके दधिमथनादिके स्वधर्मे सक्तान् ॥—अभुण्डितेति । २७८ भुडि वरणे । स्वीकारस्तत् । हरण इत्येके । कर्मणि क्त । उच्चण्डेति । २७९ चडि कोपे । पचाद्यच् ।

लाटार्हशाटीवटितैर्वटुव्रजैर्वृतान्खलैश्चाकिटितान्प्रखेटकैः ।
अशेटनीयैः सुधियामसेटकैर्युताञ्जटाझाटधरैश्च कैश्चन ॥ ४० ॥

वटुव्रजैर्वृतान् व्याप्तान् । कीदृशैः । लाटार्हशाटीवटितैः । लाटार्हाभिर्वाल्ययोग्याभिः शाटीभिर्वस्त्रैर्वटितैर्वेष्टितैः । प्रखेटकैः खलैरकिटिताश्च । प्रखेटकैस्त्रासकैः । अकिटितान् अत्रासितान् । कैश्चन जटाझाटधरैश्च युतान् । जटाझाटो जटासंघः । कीदृशैः । सुधियामशेटनीयैरत्यन्तमादर्तव्यैः । स्वयं चान्येषामसेटकैरादर्तृभिः ॥—लाटेति । ३०० लट बाल्ये । घञ् । शाटीति । ३०१ शट रुजाविशरणगत्यवसादनेषु । घञन्तात् 'जातेरस्त्रीविषयाद्–' इति ङीष् । वटितैः । ३०२ वट वेष्टने । कर्मणि क्त । वट्विति । 'वटिवटिचञ्चिभ्यश्च' इति भोजोक्त्या तस्मादेव उन् । अकिटितान् प्रखेटकैरिति । ३०३ किट ३०४ खिट त्रासे । त्रासनायामित्यर्थः । भीमार्थे च द्रुमे । कर्मणि क्त । ण्वुल् च अशेटनीयैः । ३०५ शिट ३०६ षिट अनादरे । शिटेरनीयर् । असेटकैः । षिटेर्ण्वुल् । जटाझाटेति । ३०७ जट ३०८ झट संघाते । जटेरच् । झटेर्घञ् ॥

कचिद्भटाधिष्ठितवेदिकातटान्कचिच्च खट्वाविहरन्नटीजनान् ।
कचिच्च पेटीशतपूर्णहाटकान्कचित्सटालोटनलोलघोटकान् ॥ ४१ ॥

भटैरधिष्ठित आस्थितो वेदिकानां तट उन्नतप्रदेशो येषु तान् । खट्वाया विहरन्तः क्रीडन्तो नटीजना येषु तान् । पेटीशतेषु पूर्णानि हाटकानि हेमानि येषु तान् । सटाना बालरोम्णां लोटनेन क्षोभणेन लोलाश्चलन्तो घोटका अश्वा येषु तान् ॥— भटेति । ३०९ भट भृतौ । भृतिर्वेतनप्राप्तिः । अस्मात्पचाद्यच् । तटेति । ३१० तट उच्छ्राये । अच् । खट्वेति । ३११ खट काङ्क्षायाम् । 'अशिप्रुषिलटिकणिखटिविशिभ्यः क्वन्' इति क्वन् । नटीति । ३१२ णट नृत्तौ । हिंसायां च द्रुमे । नृत्तिर्नर्तनम् । तच्चात्र नटव्यापारः । अस्मादचि जातिङीष् । पेटीति । ३१३ पिट शब्दसंघातयोः । घञन्ताद् गौरादिङीष् । हाटकानिति । ३१४ हट दीप्तौ । संज्ञायां ण्वुल् । बाहुलकात् स्त्रीत्वाभावः । सटेति । ३१५ षट अवयवे । अजन्ताट्टाप् । लोटनेति । ३१६ लुट विलोटने । 'लुल' इत्यन्ये । लुटेर्ल्युट् । लोलेति । लुलेरच् ॥

चेटैर्विटैश्चानुगतानवेटकैरेटत्पशूत्केटिरजःकटन्मलान् ।
अकण्टितारोदयदंशुमण्डितैरकुण्डरत्नैर्मुडितार्कदीधितीन् ॥ ४२ ॥

चेटैर्विटैश्चानुगतान् व्याप्तान् । कीदृशैः अवेटकैरनाक्रोशकैः । परेषामनिन्दकैः । एटन्त्यः पशुभ्य उत्केटिभिरूर्ध्वं गच्छद्भी रजोभिर्हेतुभिः कटद्वपगच्छन् मलं पापं येभ्यस्तान् । अकुण्डरत्नैरकुण्डैरविकलैः संपूर्णैः रत्नैः पद्मरागादिरत्नैर्मुडिता मर्दिता तिरस्कृतार्कप्रभा येषु तान् । कीदृशै रत्नैः । प्रकण्डितारोदयदंशुमण्डितैः । प्रकण्टितारं व्याप्तदिक्कं

१ 'विरुजा' पा०. २. 'वित्रासे' पा०.

शठत्वमार्गे शुठितैरकुण्ठितैरलुण्ठिताशुण्ठितसौहृदान्वितैः ।
प्ररुण्ठितार्थैरनुलुण्ठकैर्हरेः प्रचुड्डबोधाड्भिरतीव शोभितान् ॥ ४५ ॥

हरेरनुलुण्ठकैरतीव शोभितान् । अनुलुण्ठकैरनुचरै । अतीवात्यर्थम् । कीदृशै । शठत्वमार्गे शुठितै प्रतिहतगतिभि । अकुण्ठितै स्वकृत्येष्वप्रतिहतै । अलुण्ठितेनाप्रयासेनाप्रतिहतेन वा अशुण्ठितेनाशुष्केण क्षीणेन च सौहृदेनान्वितै । प्ररुण्ठितं सम्यग्गतमर्थ येषा तै । प्रचुड्डस्य अभिप्रायाविष्करणस्य बोधे अड्भिरभियुक्तै ॥—शठत्वेति । ३४२ शठ कैतवे च । अस्मात्पचाद्यजन्तात् त्वप्रत्यय. । शुठितै । ३४३ शुठ गतिप्रतिघाते । ३४४ कुठि च । अयं प्रतिघातमात्र एवेति माधव । आलस्ये गतिप्रतिघाते वास्ति द्वमे । शुठे कर्मणि क्त । अकुण्ठितै । कुठे कर्तरि क्त । अलुठितेति । ३४५ लुठि आलस्ये प्रतिघाते च । कर्तरि क्त । अशुण्ठितेति । ३४६ शुठि शोषणे । प्राग्वत् क्त । प्ररुण्ठितेति । ३४७ रुठि ३४८ लुठि गतौ । रुण्ठे कर्तरि क्त । लुण्ठेर्ण्वुल् । प्रचुड्डेति । ३४९ चुड्ड भावकरणे । अभिप्रायाविष्करण तत् । अस्माद् घञ् । अड्भिरिति । ३५० अड्ड अभियोगे । दोपधादस्मात् क्विपि सयोगान्तलोपः ॥

अकड्ढरिक्रीडनधूततोडकान्प्रहूडितान्होदडरोड्यभिक्षुकैः ।
प्ररोडकानङ्गविलोलितैर्वृतान्रतावडद्भिर्ललनाजनैः कलैः ॥ ४६ ॥

अकड्ड अकर्कशेन हरिक्रीडनेन धूता निरस्तास्तोडका पीडका येषु तान् । होडद्भि सचरद्भिः । अरोड्यै आदरणीयैर्भिक्षुकै सन्यासिभि प्रहूडितान् प्राप्तान् । ललनाजनैर्वृतान् । कीदृशै । प्ररोडकेन सर्वोन्मादकेन अनङ्गेन विलोलितैर्मादितै । रतावडद्भिरुद्यच्छद्भि । कलैर्मधुरै ॥—अकदिति । ३५१ कड्ड कार्कश्ये । चुड्डादयस्त्रयो दोपधा । डोपधाश्च द्वमे । कड्डे प्राग्वत् क्विप् । क्रीडनेति । ३५२ क्रीड विहारे । ल्युट् । तोडकानिति । ३५३ तुड्ड तोडने । 'तूड्' इत्येके । तोडनमुपघ्म् । तुडेर्ण्वुल् । प्रहूडितान् । ३५४ हूड्ड ३५५ होड्ड गतौ । हुड्ड इत्येके । हूडे कर्मणि क्त । होडदिति । होडे शता । अरोड्येति । ३५६ रौड्ड अनादरे । ण्यत् । प्ररोडकेति । ३५७ रोड्ड ३५८ लोड्ड उन्मादे । रोडेर्णिजन्ताद् ण्वुल् । विलोलितै लोडेर्णिजन्तात् कर्मणि क्त । अडद्भि । ३५९ अड उद्यमे । शता । ललनेति । ३६० लड विलासे । लडेर्युच् । कलै । ३६१ कड मदे । कडि इत्येके । कडेरच् । शौटादय उदात्ता अयतिवर्जं(?) उदात्तेत ॥

अथ गोपगृहान् पश्यतोऽक्रूरस्य हर्षातिशयमाह—

अतिप्स हर्षाश्रु धृतिश्च तेपिता गृहानिमान्प्रस्तिपितार्ति पश्यतः ।
अस्तेपितानन्दरसस्य तस्य न व्यग्लेपि चाङ्गैर्विपिनाध्वकेपनात् ॥ ४७ ॥

इमान् गृहान् प्रस्तिपितार्ति पश्यत. तस्य हर्षाश्रु अतिप्स । प्रस्तिपिता क्षरिता गता आर्तिर्येस्मिन् तथा पश्यतस्तस्याक्रूरस्य हर्षाश्रु अतिप्साक्षरत् । धृतिश्च तेपिता गता ।

पशव प्रचीभ्यरेभे. सह व्रजमागता प्रचीभ्याः प्रशसनीया रेभा शब्दाले । कीदृशं । अम्भसा निधे: समुद्रस्य प्ररम्भण शब्दं स्तम्भयितुं रोद्धु शील येषा ते । अस्कम्भिता शिशून् प्राप्य उज्जृम्भहर्षा सशलभनं लिलिहु । अस्कम्भिता. प्रतिबन्धरहिता । उज्जृम्भो वर्धमानो हर्षो यासा ता. । सशलभन शलभनेन सहितं यथा तथा । शलभन श्लाघा । लिलिहु । शिशून् विशिनष्टि—सजम्भनान् जम्भनेन सहितान् । जम्भन जृम्भा ॥—प्रचीभ्येति । चीभेर्ण्यत् । रेभे । ३८५ रेभृ शब्दे । अभि रभि इत्येके । रेभेर्घञ् । अम्भसामिति । अम्भेरसुन् । अम्भसानिधीति 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । प्ररम्भणेति । रम्भेर्ल्युट् । स्तम्भिभिरिति । ३८६ ष्टभि ३८७ स्कभि प्रतिबन्धे । स्तम्भेर्णिजन्ताण्णिनि. । अस्कम्भित' । स्कम्भे कर्तरि क्त । सजम्भनान् । ३८८ जभि ३८९ जृभि गात्रविनामे । आय ईदिदित्येके । जम्भेर्ल्युट् । रधिजभोरचीति नुम् । उज्जृम्भेति । जृम्भे पचाद्यच् । सशलभनम् । ३९० शलभ कत्थने । ल्युट् ॥

वल्भप्रगल्भाः पथिकाश्च तत्क्षणं सुश्रम्भणस्तोभयुतानगुर्गृहान् ।
गोपायता धर्ममधूपितात्मना जल्पान्विमुच्याभवदुद्यमो जपे ॥ ५१ ॥

पथिकाश्च तत्क्षण गृहान् अगु. । यथा गावस्तथा पान्था अपि त कालमभिव्याप्य सन्ध्यावलितिरितपर्यन्त(?)मागता । कीदृशा । वल्भे भोजने प्रगल्भा. समर्था । कीदृशान् गृहान् । सुश्रम्भणस्तोभयुतान् समीचीनपाकव्यापारयुक्तान् । [ ततश्च ] धर्मं गोपायतामधूपितात्मना जल्पान् विमुच्य जपे उद्यमोऽभवत् । गोपायता परिरक्षताम् । अधूपितोऽसतप्त आत्मा मनो येषा तेषा सतामित्यर्थात् ॥—वल्भेति । ३९१ वल्भ भोजने । घञ् । प्रगल्भा । ३९२ गल्भ धार्ष्ट्ये । पचाद्यच् । सुश्रम्भणेति । ३९३ श्रम्भु पाके । ल्युट् । स्तोभेति । ३९४ ष्टुभु स्तम्भे । अयं व्यापारार्थे प्रसिद्ध । अस्मात् घञ् । तिपादयोऽनुदात्तेत । तिपिवर्जमुदात्ता । गोपायतामिति । ३९५ गुपू रक्षणे । स्तम्भान्ता उदात्ता उदात्तेत । अस्मात् 'गुपूधूपविच्छिपणिपनिभ्य आय ' इत्यायप्रत्ययान्त. शता । अधूपितेति । ३९६ धूप सतापे । कर्तरि क्त. । जल्पान् । ३९७ जल्प ३९८ जप व्यक्तायां वाचि । जप मानसे च । जल्पेर्घञ् । जप इति । 'व्यधजपोरनुपसर्गे' इत्यप् ॥

चेपु सपन्तोऽसचितां प्रियां प्रियाः संध्येति रेपुः कललापिनः शुकाः ।
श्येनाश्चुपित्वा तुतुपु. कपोतकान्काकानतुम्पन्नभितुन्नुपुः शशान् ॥ ५२ ॥

प्रिया सपन्तोऽसचिता प्रिया चेपु । प्रिया पादप्रणामादिभिर्मिलिता असचिता प्रिया सान्त्वयामासु । कललापिन शुका. सध्या इति रेपुर्व्यक्तमवदन् । श्येनाश्चुपित्वा कपोतकास्तुतुपु । पक्ष्याखेटाय विसृष्टा श्येनाश्चुपित्वा मन्दं गत्वा तुतुपुरपीडयन् । काकान् अतुम्पन् विव्यधु । शशानभितुन्नुपुरहिंसन् ॥—चेपुरिति । ३९९ चप सान्त्वने । लिट् । सपन्त. । ४०० षप समवाये । पचेत्येके । समवाय सबन्ध सम्यगवबोधो वा । सपे शता । असचिताम् । सचे कर्तरि क्तः । रेपु । ४०१

रप ४०२ लप व्यक्तायां वाचि । रपेर्लिट् । ररम्फपिन । ररोपीविनिः । लुलोपिथ ।
४०३ चुप मन्दायां गतौ । अस्मात् समानकर्तृकयोः पूर्वकाले इति क्त्वा । चुचुपु ।
४०४ तुप ४०५ तुम्प ४०६ त्रुप ४०७ त्रुम्प ४०८ तुफ ४०९ तुम्फ ४१०
त्रुफ ४११ त्रुम्फ हिंसार्थाः । तुपेर्लिट् । अतुम्फन् । तुम्फेर्लङ् । अभितुतुपु ।
तुपेर्लिट् ॥

अतुम्फ्यथाथाऽऽनमिन प्रतोफितुं अतुम्फशीलाग्निभवोऽथ राक्षसान् ।
अत्रोफकास्तुम्फितुमुद्यता लतैर्व्यापीमपर्पन्नरफन्नथ द्विजाः ॥ ५३ ॥

अथ द्विजा अतुम्प्यथाथाथमिन प्रतोफितुं मिक्ताः राक्षसान् अत्रैस्तुम्फितुमुद्यता व्यापीमपर्पन् । मवीमरफन् । अतुम्प्यमतिर्सं धाम तेजो यस्य तमिनं सूर्यं प्रतोफितुं हिं सितुं मिक्ता संपीमथतो राक्षसान् मन्देहनाम्नो अत्रै संध्यावन्दिभिस्तुम्फितुं हन्तुमपप मपप्सन् । केचित् मवीमरफन्नपप्सन् । वीरधा द्विजा । अत्रोफका अहिंसका वीरधान् राक्षसान् । अतुम्फशीलान् । प्रतुम्फो हिंसन शीलं येषां तान् ॥—अतुम्प्येति । तुम्पेर्लट् । प्रतोफितुम् । तुफेस्तुमुन् । अतुम्फेति । तुम्फेयम् । अत्रोफका । तुम्फे-र्ण्वुल् । तुम्फितुम् । तुम्फेस्तुमुन् । अपर्पेमिति । ४१२ पर्प ४१३ रफ ४१४ रफि ४१५
मर्व ४१६ पर्व ४१७ लर्व ४१८ वर्व ४१९ मर्व ४२० कर्व ४२१ खर्व ४२२
गर्व ४२३ शर्व ४२४ षर्व ४२५ चर्व गतौ । अर्पायमो मोपधा इत्येके । पर्पेर्लङ् ।
रफेश्च लङ् ॥

इये सुरम्फैर्हुतमर्पतो रवे पर्वद्भिराक्रम्यत रफ्मिा करैः ।
प्रचर्म्य शैलानुपमर्म्य पद्मिनी प्रकर्म्य चाशा भ्रमशोषिवैरिव ॥ ५४ ॥

सुरम्फैर्ह्वेर्हुतमर्पतो रवे पर्वद्भिः करैः रफिमा आक्रम्यत । सुरम्फैः शोभनगमन-शीलैः । अवत गच्छत । पर्वद्भिः प्रसरद्भिः करैः रश्मिभिः । रफिमा रक्तत्वम् । आक्रम्यत सम्यगयापि । शैलम् प्रचर्म्य पद्मिनीमुपमर्म्य आशाः प्रकर्म्य च भ्रमशोषि तैरिव । शैलभ्रमणेन पद्मिनीप्राप्त्या सर्वदिक्संचारेण च जातेन परिभ्रमेण शोषितै रिव ॥—सुरम्फैरिति । रम्फेघञ् । अर्वे गता । पर्वेण । आक्रम्यत । कर्मणि लङ् । चर्विमर्विकर्वीनां ल्यप् ॥

अखर्वि शैलाग्रमगर्वि सौधभूरशर्वि शाखाशिखरं च रश्मिभिः ।
ऊर्ध्वप्रसर्पाच्च तु चर्विता मही विजुम्भितेऽर्के परिजुम्भिताम्बुजे ॥ ५५ ॥

रश्मिभिः शैलाग्रमखर्वि । सौधभूरगर्वि । शाखाशिखरं च अशर्वि । सर्वत्र प्राप्तमि त्यर्थः । अर्के परिजृम्भिताम्बुजे विजृम्भिते ऊर्ध्वप्रसर्पात् मही न तु चर्विता । परिजृम्भि तानि अर्दितानि अम्बुजानि येन तस्मिन् अर्के दिवाप्रकाशिते सति । ऊर्ध्वगमनात् शैलो-मौ्ली रश्मिभिः न प्राप्ता अचर्वि । अगर्वि । अशर्वि । एषु कर्मणि लिङ् । प्रसर्पेति ।

सर्वेर्घञ् । चर्वे कर्मणि क्त । कुम्बितेति । ४२६ कुवि आच्छादने । प्राग्वत् क्त । परिलुम्बितेति । ४२७ लुवि ४२८ तुवि अर्दने । लुम्बे प्राग्वत् क्तः ॥

वियोगसंतुम्बितकोकचुम्बिता सतापस्तृब्धापि जगाद तद्वधूः ।
मा त्वां स्मरः सृम्भतु शोभनाकृते चिन्ता न शुम्भेन च सुम्भतु व्यथा ५६

वियोगसंतुम्बितकोकचुम्बिता तद्वधूः सतापस्तृब्धा अपि जगाद । वियोगेन भविष्यता संतुम्बितेनार्दितेन कोकेन चुम्बिता तद्वधूस्तस्य कोकस्य वधूः स्वयं सतापेन स्तृब्धा पीडिता अपि जगाद । हे शोभनाकृते भासमानाकृते प्रिय, त्वा स्मरो मा सृम्भतु पीडयतु । चिन्ता न शुम्भेत् न स्फुरतु । पीडयतु वा । व्यथा न च सुम्भतु ॥— संतुम्बितेति तुवे कर्मणि क्तः । ४२९ चुवि वक्त्रसंयोगे । प्राग्वत् क्त । स्तृब्धा । ४३० सृभु ४३१ सृन्भु हिंसार्थौ । षिभु षिन्भु इत्येके । स्तृभे प्राग्वत् क्त । सृन्भेर्लोट् । शोभदिति । ४३२ शुभ ४३३ शुन्भ भाषणे । हिंसाया च भासन इत्येके । शुन्भेलन्ये । शुभे॰ शता शुभेर्लिङ् । सुन्भेर्लोट् । शुपादय उदात्ता उदात्तेत ॥

प्रघिण्य भूपाः परिघुण्य मालिकाः प्रघृण्य घोणापुटघूर्णिचन्दनम् ।
पणाय्यरूपाः पनिताकृतीन्ययुर्भामिन्य एवाक्षमया स्वकामुकान् ॥५७॥

भामिन्य एव भूपा प्रघिण्य मालिकाः परिघुण्य घोणापुटघूर्णिचन्दनं प्रघृण्य च अक्षमया स्वकामुकान् ययु । भामिन्यः प्रणयकुपिता स्त्रिय । एवेत्यप्यर्थे । भूपा मालिका चन्दन च गृहीत्वेत्यर्थ । घोणापुट नासान्तर्भाग घूर्णयति भ्रमयतीति तथा । कीदृश्यः । पणाय्यं स्तुत्यं रूप यासा ता । कीदृशान् कामुकान् । पनिता स्तुता आकृतिर्येषा तान् ॥—प्रघिण्य । परिघुण्य प्रघृण्येति । ४३४ घिणि ४३५ घुणि ४३६ घृणि ग्रहणे । इदित्त्वाद् नुमि ष्टुत्व ल्यप् । घोणेति । ४३७ घुण ४३८ घूर्ण भ्रमणे । घुणेरचिक्लोडादिनिपातनात् टाप् । घूर्णीति । घूर्णेर्णिजन्ताण्णिनि । पणाय्येति । ४३९ पण व्यवहारे स्तुतौ च । ४४० पन च । पन स्तुतावेव। 'गुपूधूप—' इत्यायान्ताण्ण्यत् । पनितेति । पने कर्मणि क्त । भामिन्य । ४४१ भाम क्रोधे । घञन्तान्मत्वर्थीय इनि । अक्षमयेति । ४४२ क्षमूष् सहने । षित्वादङ् । कामुकानिति । ४४३ कमु कान्तौ । कान्तिरिच्छा । 'लषपत—' इत्यादिना उकञ् । घिण्यादय उदात्ता अनुदात्तेतः ॥

अणद्दिशः केलिरणैर्मनोज्ञया वाण्या भणन्तो मणिभूषणोत्कणाः ।
वनात्कुमाराः क्वणिताग्र्यवेणवो व्रणद्विपाणध्रणिताभ्रमाययुः ॥ ५८ ॥

कुमारा वनात् क्वणिताग्र्यवेणवो व्रणद्विपाणध्रणिताभ्रमाययु । व्रणता शब्दायमानेन विषाणेन ध्रणितं शब्दितमभ्रमाकाशं यस्मिन् तथा आययु । कीदृशा बाला । केलिरणै अणद्दिशो अण्यन्त्य शब्दायमाना दिशो येषां ते । मनोज्ञया वाण्या भणन्त । मणिभूषणै उत्कणा सशब्दा । क्वणिता अग्र्या वेणवो येषा ते ॥—अणदिति । ४४४ अण ४४५ रण ४४६ वण ४४७ भण ४४८ मण ४४९ कण ४५० क्वण

४५१ मण ४५२ भ्रण ४५३ ध्वण शब्दार्थाः । भण इत्येके । अणे क्त्वा । म णीति । मणेरौणादिक इन् । उत्कण्ठा । कणेरप् । कणितेति । कणे कर्तरि क्तः । भ्रण दिति । भ्रणे क्त्वा । भ्रणितेति । भ्रणे भावक्तः ॥

ध्वणच्छिरन्धा समोषिताशुमाञ्झोणान्मुमोषिजनो दुदोह च ।
भ्रमोषिताश्चैपनविभ्रणश्चिवीनतुल्यधाम्धेनुगणान्कनत्स्वनान् ॥५९॥

मुमोषिजनो धेनुगणान् दुदोह । गोपस्त्रीजनो नवसूतान् वत्सगणान् अमुचत् (?) । कीरणान् । अपच्छिरन् शब्दायमाना बोधा येषां तान् । धामसमोषिताशुमान् धाणेन शब्देन सम्यगोषितमपनीतमशुभं येषां तान् । शोणान् रक्त किपिशवर्णान् । प्रश्लोषि तान् एकत्र संघातीभूतान् । प्रेम्णैव गत्या विभ्रणन्ती शब्दायमाना क्षितिर्येषां तान् । अ तुल्यधाम्न् सौम्यान् । कनन्तः शोभमानाः स्वना येषां तान् ॥—ध्वणदिति । ध्वणे शता । धाणेति । धाणेर्घञ् । शोणितेति । ४५४ शोणृ वर्णगतौ । कर्मणि क्तः । शोणान् । ४५५ श्रोणृ वर्णगत्योः पचाद्यच् । श्रोणीति ४५६ श्रोणृ संघाते । ४५७ श्लोणृ च । श्रोणेरिन् । प्रश्लोणितान् । श्लोणे कर्तरि क्तः । प्रेम्णेति । ४५८ प्रैणृ गतिप्रेरणश्लेष णेषु । ['पैणृ' इत्यपि क्वचित्पठ्यते ।] ल्युट् । विभ्रणदिति । ४५९ भ्रण शब्दे । भण इत्येके । भ्रणेः शता । 'रधाम्नाम्' इति पा । स्वनणेति । क्वणेः पचाद्यच् । कनदिति । ४६० कनी दीप्तिकान्तिगतिषु । शता । स्वनेति । ४६१ स्तन ४६२ ध्वन शब्दे । पचाद्यच् ॥

वनाद्वनं सानुममन्दमभ्रमद् व्याघोत्करोऽहमतिर्मीमिताशय ।
चान्तामिषश्छान्तजलः फलावली जान्त्वा क्षमं चेमनमक्मीद्गुहाम् ॥६०॥

वनाद् वनं सानुं चामन्, एवं भ्रमन्, व्याघोत्करः चान्तामिषः छान्तजलः फला वल्लीं जान्त्वा जेमनं क्षमन् गुहामक्मीत् । अमन् संचरन् । भ्रमन् प्राप्नुवन् । चान्तं भक्षितं मांसं येन सः । छान्तं पीतं जलं येन सः । जान्त्वा भुक्त्वा । जेमनं जेयं आहारम् । क्षममन् । अक्मीत् प्रविवेश । अहमतिः अज्ञानं तम मीमितः प्राप्तः आशयो यस्य सः ॥—वनादिति । वनेरप् । वनमिति । ४६३ वन ४६४ षण संभक्तौ । अर्थभेद मात्रेण पुनः पठितस्य वनेरप्यप् । सानुमिति । 'दसनि' इति सनेः ञुण् । अमन् । ४६५ अम गत्यादिषु । आपुच्छेः शब्दसंभक्तिरोगेषु । असाध्यता । भ्रमन् । ४६६ भ्रम ४६७ हम्म ४६८ मीमृ गतौ । मीम शब्देऽपीत्येके । भ्रमेः शता । अहम्मतिः । हम्मेर्भावे क्विप् अप् च । हम्मतिशामम् । नञ्समासः । मीमितेति । मीमेः कर्मणि क्तः । चान्तेति । छान्तेति । ४६९ चमु ४७० छमु ४७१ जमु ४७२ झमु अदने । जिमेति चैके । चमिछम्योः कर्मणि क्तः । जान्त्वा । जमे क्त्वा क्षमन् क्षमे शता । जेमनम् । जिमेर्ल्युट् । अक्मीत् । ४७३ क्रमु पादविक्षेपे । लुङ् ॥

१ 'माला' इति पाठः.

अन्तस्थया कौतुकमूर्च्छया व्रजं तदायतासौ वयमानवात्सकम् ।
पय. प्रदोहादिरताः प्रमय्य तं प्रैक्षन्त नूत्नाचयितं कुतूहलात् ॥६१॥

असौ तदा अन्तस्थया कौतुकमूर्च्छया व्रजमायत् आगच्छत् । कीदृशं व्रजम् । वयमानं ततस्ततो गच्छत् वात्सक वत्ससमूहो यस्मिंस्तम् । पय प्रदोहादिरता जना प्रमय्य नूत्नाचयितं त कुतूहलात् प्रैक्षन्त । प्रमय्य प्राप्य नूत्नया आचयित आगतम् ॥—आयतेति । ४७४ **अय** ४७५ **वय** ४७६ **पय** ४७७ **मय** ४७८ **चय** ४७९ **तय** ४८० **णय** गतौ । पय इत्यप्येके । 'तय णय रक्षणे च' इत्येके । अयेर्लङ् । वये शानच् । पयेरसुन् । मयेर्ल्यप् । आचयित । चये कर्तरि क्त ॥

प्रतय्य किंचिन्नयितो गृहान्तिकं ददर्श धन्य. स दयालुमीश्वरम् ।
गोदोहदेशे रयितं सहाग्रजं तमूतसत्कीर्तिमपूतिभिर्गुणैः ॥ ६२ ॥

धन्य स किंचित् प्रतय्य गृहान्तिकं नयितः दयालुमीश्वर सहाग्रजं ददर्श । प्रतय्य चरित्वा । नयित प्राप्त । कीदृशमीश्वरम् । गोदोहदेशे रयितमुपगतम् । अपूतिभिर्गुणैरूतसत्कीर्तिम् । सुरभिभि सर्वेन्द्रियानन्दिभि स्वगुणरूपैर्गुणैस्तन्तुभिरूता कृता सती प्रशस्ता कीर्तिरूपा पटी येन तम् । प्रतय्येति । तयेर्ल्यप् । नयित णये कर्तरि क्त । दयालुमिति । ४८१ **दय** दानगतिरक्षणहिंसादानेषु । 'स्पृहिगृहिपतिदयि–'इत्यादिनालुच । रयितम् । ४८२ **रय** गतौ । कर्तरि क्त. । ऊतेति । ४८३ **ऊयी** तन्तुसताने । कर्मणि क्त । अपूतिभिरिति । ४८४ **पूयी** विशरणे दुर्गन्धे च । क्तिन् ॥

ईश्वर विशिनष्टि चतुर्दशभि —

प्रक्नोपयन्तं मुरलीं महीभरक्ष्मायं चलस्फीतसुपीनदोर्युगम् ।
अशेपतां भ्रूशलनैर्वलदृशा प्रवल्लमानं प्रियवल्लवीशुचम् ॥ ६३ ॥

मुरलीं प्रक्नोपयन्त शब्दयन्त महीभरक्ष्मायं महीभरस्य क्ष्मायं विधूनयितार त्वत्कार चलेन स्फीतमतिस्थूलं दोर्युगं यस्य तम् । भ्रूशलनैर्भ्रुवोश्चलनैरशेपतामशेपस्य तायितार पालकम । वलदृशा । वलन्त्या सचरन्त्या दृशा प्रियवल्लवीशुचं प्रवल्लमान छादयन्तम् ॥—प्रक्नोपयन्तमिति । ४८५ **क्नूयी** शब्दे उन्दे च । 'अस्माण्णिचि अर्तिह्री–'इत्यादिना पुकि शता । भरक्ष्मायम् । ४८६ **क्ष्मायी** विधूनने । कर्मण्यण् । स्फीतसुपीनेति । ४८७ **स्फायी** ४८८ **ओप्यायी** वृद्धौ । द्वयो कर्तरि क्त । अशेपता । ४८९ **तायृ** सतानपालनयो । क्विपि 'लोपो व्यो ' इति यलोप । शलनैरिति । ४९० **शल** चलनसवरणयो । ल्युट् । वलदिति । ४९१**वल** ४९२ **वल्ल** सवरणे सचरणे च । अनुदात्तेता तङोऽनित्यत्वाद्वले शता । प्रवल्लमानमिति । वल्लवीति वल्ले शानच् । औणादिकोऽवक्च ॥

मामल्यमानं स्मितमल्लिकावलीमामाल्यदैत्याधिपभल्लनोद्धुरम् ।
कलोरुकल्लोलकलिन्दजाजले वालैस्तयूभिः सह देवनोत्सुकम् ॥ ६४ ॥

दृशोरुन्मीलनश्मीलनलीलयोन्मीलननिमीलनरूपया लीलयोत्स्मीलितं प्रकाशितम् क्ष्मीलित तिरोहितं च सर्वविष्टपं येन तम् । पिच्छस्रजा पीलितं बद्धं नीलकुन्तलं येन तम् । शीलेन सकीलितं बद्ध वशीकृतं लोकमानसं येन तमीश्वरम् ॥—उन्मीलनश्मीलनेति । **५१७ मील ५१८ श्मील ५१९ स्मील ५२० क्ष्मील** निमेषणे । सकोचन तत् । मीलश्मीलाभ्या ल्युट् । उत्स्मीलितक्ष्मीलितेति । स्मीलक्ष्मीलाभ्या णिजन्ताभ्या कर्मणि क्त । पीलितेति । **५२१ पील** प्रतिष्टम्भे । रोधन तत् । कर्मणि क्त । नीलेति । **५२२ णील** वर्णे । इगुपधत्वात् क । शीलेनेति । **५२३ शील** समाधौ । समाधिनिष्ठाकरणम् । घञ् । सकीलितेति । **५२४ कील** बन्धने । कर्मणि क्त ॥

सन्मार्गसंकूलिषु शूलदायिनं दहन्तमेनांसि च तूलपूलवत् ।
मूलं फलं वाप्यदतामचुल्लतां प्रफुल्लभक्त्युन्नतिचिल्लचेतसाम् ॥ ६८ ॥
अवेलितानां प्रतिचेलधारिणामकेलिलोले हृदि बद्धखेलनम् ।
फणीश्वरक्ष्वेलरुधं प्रवेल्लितस्रजं मुहुः पेलववातफेलनात् ॥ ६९ ॥

सन्मार्गसकूलिषु सन्मार्गनिरोधशीलेषु दुष्टेषु । शूलदायिनं पीडाकरम् । तूलपूलवदेनासि दहन्त च । प्रतिचेलधारिणा प्रतिचेलानि वल्कलादीनि दधानाना यमिनामकेलिलोले हृदि बद्धलेखनं कृतपीडनम् । मूल फलं वा अपि अदता भक्षयताम् अचुल्लतामनाविष्कृताभिप्रायाणा प्रफुल्लया विकसितया भक्त्युन्नत्या चिल्लचेतसामार्द्रीभवन्मनसामवेलिताना केनाप्यचलिताना फणीश्वरक्ष्वेलरुधं कालियस्य विषं रुन्धन्तम् । पेलवस्य मृदोर्वातस्य फेलनाच्चलनान्मुहु प्रवेल्लितस्रजं दोलायमानवनमालम् ॥—सन्मार्गसकूलिष्विति । **५२५ कूल** आवरणे । णिनि । शूलेति **५२६ शूल** रुजाया सघाते च । घञ् तूलपूलवत् । **५२७ तूल** निष्कर्षे । निष्कोषण तत् । **५२८ पूल** सघाते । द्वयोर्घञ् । मूल फलम् । **५२९ मूल** प्रतिष्ठायाम् । **५३० फल** निष्पत्तौ । द्वयो पचाद्यच् । अचुल्लताम् । **५३१ चुल्ल** भावकरणे । शता । प्रफुल्लेति । **५३२ फुल्ल** विकसने । पचाद्यच् । चिल्लेति । **५३३ चिल्ल** शैथिल्ये भावकरणे च । अच् । अवेलितानाम् । **५३४ वेल ५३५ चेल ५३६ केल ५३७ खेल ५३८ क्ष्वेल ५३९ वेल्ल** चलने । वेले कर्मणि क्त. चेलेति । चेलेरच् । केलीति । केलेरिन् । खेलनमिति । खेलेर्ल्युट् । द्वयो क्रीडार्थत्वं धातूनामनेकार्थत्वात् । क्ष्वेलेति क्ष्वेलेर्घञ् । प्रवेल्लितेति । वेल्लेे कर्तरि क्त । पेलवेति । **५४० पेल ५४१ फेल ५४२ शेल** गतौ । 'कुडिकितिपणिपेलपल्लिवल्लिगालिभ्योऽवक्' इति पेलेरवक् फेलनात् फेलेर्ल्युट् ॥

सुमार्गशेलात्स्खलतां खलात्मनां गलच्छिदार्थं सलितं महीतलम् ।
दलत्तनुप्रश्वलितान्परान्प्रतिप्रश्वल्लिताखोडसुदर्शनायुधम् ॥ ७० ॥

सुमार्गशेलात् सन्मार्गगमनात् स्खलता चलता खलात्मना गलच्छिदार्थं महीतलं सलितं प्राप्तं युद्धे दलत्तनु विदीर्यमाणदेह यथा भवति तथा प्रश्वलितान् आशु गतान् परान्

कर्मणि क्त । [ 'क्ष्यूतगोपी' इति पाठे क्षेवुधातुर्बोध्यः । ] ऊर्णेति । **५६८ उर्वी ५६९ तुर्वी ५७० थुर्वी ५७१ दुर्वी ५७२ धुर्वी** हिंसार्थाः । ऊर्वे कर्मणि क्त । 'लोपो व्योर्वलि' वलोपे । 'रदाभ्या' इति नत्वम् । 'र्वोरुपधाया दीर्घ इकः' । तूर्णद्रूर्णेति । तुर्वीथुर्व्यो प्राग्वत् क्त । दुदूर्विषून् । दुर्वे· सन्युप्रत्यय· । धूर्वितु । धुर्वेस्तुमुन् । गूर्वणम् । **५७३ गुर्वी** उद्यमने । ल्युट् । मूर्वन्तम् । **५७४ मुर्वी** बन्धने । शता । अपूर्वितेति । **५७५ पुर्व ५७६ पर्व ५७७ फर्व ५७८ मर्व** पूरणे । अन्त्यो गतौ च द्रुमे । पूर्वे कर्मणि क्त । पर्वतेति । 'भृमृदृशि–' इत्यादिना पर्वेरतच् ॥

अफर्विताकाङ्क्षितमर्वकं सतां मांसादिसंचर्वकदुष्टभर्वकम् ।
कर्वद्वधूकेलिरसेन खर्वितं गर्वार्वकं शर्वपरेण सर्वताम् ॥ ७४ ॥

सतामफर्वितस्यापूर्णस्याकाङ्क्षितस्य मर्वकं पूरकम् । मांसादे सचर्वकाणां दुष्टानां भर्वक हन्तारम् । कर्वन्तीनां दर्पयन्तीनां वधूनां केलिरसेन खर्वितं मायन्तम् । शर्वपरेण हिंसापरेण सर्वता लोकं हिंसता गर्वस्यार्वकं नाशकम् ॥—अफर्वितेति । फर्वे कर्तरि क्त । मर्वकम् । मर्वेर्ण्वुल् । सचर्वकम् **५७९ चर्व** अदने । ण्वुल् । भर्वकम् । **५८० भर्व** हिंसायाम् । ण्वुल् । कर्वदिति । **५८१ कर्व ५८२ खर्व ५८३ गर्व** दर्पे । आद्य ईदिदित्येके । तस्माच्छता । खर्वितम् । खर्वे कर्तरि क्त । गर्वेति । गर्वेर्घञ् । अर्वकमिति । **५८४ अर्व ५८५ शर्व ५८६ षर्व** हिंसायाम् । अर्वेर्ण्वुल् । सर्वेति । शर्वेर्घञ् सर्वताम् । सर्वे शता ॥

विश्वेन्वितं स्रङ्मधुपिन्विताङ्गकं मिन्वन्तमुच्चैः कृपयैव निन्वकान् ।
हिन्वन्तमाभीरकुलं विलासिनीर्दिन्वन्तमाधिन्वितदेवमण्डलम् ॥७५॥

विश्वस्मिन्निन्वितं व्याप्तं सर्वैः प्रीणितं वा । स्रङ्मधुना पिन्वितानि सिक्तानि अङ्गकानि यस्य तम् । कृपया कृपामृतेन एव निन्वकान् सेवकान् उच्चैरधिक मिन्वन्त सिञ्चन्तम् । आभीरकुल हिन्वन्त प्रीणयन्तम् । विलासिनीर्दिन्वन्त तोषयन्तम् । आधिन्वितं सम्यक्प्रीणित देवमण्डलं येन तम् ॥—इन्वितमिति **५८७ इवि** व्याप्तौ । प्रीणने चैके । इदित्वानुम् । कर्तरि क्त । पिन्वितमिति । **५८८ पिवि ५८९ मिवि ५९० णिवि** सेचने । सेवन इत्येके । पिन्वे कर्मणि क्त । मिन्विन्तम् । मिन्वे शता । निन्वकान् । निन्येर्ण्वुल् हिन्वतम् । दिन्वन्तम् । **५९१ हिवि ५९२ दिवि ५९३ धिवि ५९४ जिवि** प्रीणनार्थाः । हिन्विदिन्व्यो शता । आधिन्वितेति । धिन्वे· कर्मणि क्त ॥

जिन्वन्तमुर्वी निजरिण्वनैः सता रण्वन्तमन्तर्भवधन्वपादपम् ।
कृण्वन्तमाश्चर्यगतीरमूर्तिदं जगन्त्यवन्तं त्रिदशोपधावितम् ॥ ७६ ॥

निजरिण्वनैरात्मीयसचारैरुर्वी जिन्वन्त प्रीणयन्तम् । सतामन्तर्मनो रण्वन्तं प्राप्नुवन्तम् । भवरूपे धन्वनि मरुभूमौ पादपं छायाकर वृक्षम् । आश्चर्यगती कृण्वन्तं कुर्वन्तम्

स खलु हर्षवर्षितो हर्षेण वर्षित स्निग्धीभूत पूर्णः सन् भाषितुं समुचितं च गेषितुमन्वेष्टुं नाशकत् । येषणात्सहरिजेषसम्भ्रमात् येषणात्तेन प्रयत्नलब्धेन हरिजेषेण श्रीकृष्णप्राप्त्या जातात् सम्भ्रमाद्धेतोर्नेषितस्मृतिर्गतस्मृती रथात् अपेषितोऽपगतोऽवतीर्णवान्॥—भाषितुम् । ६१२ भाष व्यक्तायां वाचि । तुमुन् । वर्षित । ६१३ वर्ष स्नेहने । स्नेहनं स्निग्धीभाव । कर्तरि क्त । गेषितुम् । ६१४ गेषृ अन्विच्छायाम् । ग्लेषृ इत्येके । गेषेस्तुमुन् । येषणेति । ६१५ येषृ प्रयत्ने । ल्युट् । जेषेति । ६१६ जेषृ ६१७ णेषृ ६१८ पेषृ ६१९ प्रेषृ गतौ जेषेर्घञ् । नेषितस्मृति. । अपेषित । नेष्पेष्यो कर्तरि क्त ॥

सुप्रेषितान्पथि सरेषवृके सहेषं
हेषास्तकासरमदानतिभासुराङ्गान् ।
नासोत्थरासलसितान्नसितेन दाम्ना
सूतो ययाम समराभ्यसितांस्तुरंगान् ॥ ७९ ॥

सूत सारथिर्नसितेन सम्यग्वर्तनात् कुटिलेन दाम्ना तुरगान् ययाम बबन्ध । कीदृशान् । सरेषवृके सशब्दवृके पथि मार्गे सहेष सशब्द यथा तथा सुप्रेषितान् सम्यक् चरित्वा गतान् । हेषया शब्देनास्तो निरस्त. कासराणा महिषाणा मदो यैस्तान् । अतिभासुराङ्गान् । नासोत्थेन रासेन शब्देनश्वास्वभावजेन शोभितान् । समरेऽभ्यसितानमीतान् ॥—सुप्रेषितानिति । प्रेषेः कर्तरि क्त । रेषेति । ६२० रेषृ ६२१ हेषृ ६२२ ह्रेषृ अव्यक्ते शब्दे । अत्र रेषिर्वृकशब्दे हेविरश्वशब्दे ह्रेषेति चाश्वशब्दे पठितव्यम् । रेषेर्घञ् । हेषेरकार. । हेषेश्च । कासरेति । ६२३ कासृ शब्दकुत्सायाम् । रोगजे कुत्सितशब्देऽय प्रसिद्ध । शब्दमात्रे शोभार्थेऽप्याह भट्टि । 'सुन्दिकन्दिमन्दिमन्यिमञ्जिपञ्जिपिञ्जिपिठिकासिकुटिकुशिकदिवेदिभ्योऽरन्' इति भोजोक्त्या कासेररन् । भासुरेति । ६२४ भासृ दीप्तौ । 'भञ्जभासमिदो घुरच्' इति भासेर्घुरच् । नासेति । ६२५ णासृ ६२६ रासृ शब्दे । नासेरकार । रासेर्घञ् । नसितेति । ६२७ णस कौटिल्ये । कर्तरि क्त । अभ्यसितान् । ६२८ भ्यस भये । प्राग्वत् क्त ॥

आशंसितासिमुदितो भुवनग्रसिष्णुं
विष्णुं तमेनमसतां ग्लसमानमीहाम् ।
अक्रूर एत्य वहुधागतमंहिताहा
गर्होज्झितोऽपतदगल्भतमे पदाब्जे ॥ ८० ॥

अक्रूर एन तं विष्णुमेत्याशंसितासिमुदितोऽगल्भतमे पदाब्जेऽपतत् । अगल्भतमेऽत्यन्तमगर्हणीये । कीदृश । वहुधा गत मंहित प्रवृद्धमंहो यस्य स । गर्हयोज्झित । कीदृशम् । भुवनस्य ग्रसिष्णु संहर्तारम् । असतामीहा चेष्टामिच्छा वा ग्लसमानं ना-

घोषद्भूषः पङ्कजाक्षस्तमूचे पापश्रेणी तक्षणे त्वष्टृधर्मा ।
उक्षन्नेनं मन्दहासेन रक्षन्विश्वन्निक्षन्वल्लवीस्तृक्षिताघाः ॥ ८३ ॥

पङ्कजाक्षस्तमूचे । कीदृश । घोषन्त्य शब्दायमाना भूषा यस्य स । पापश्रेण्यास्तक्षणे तनूकरणे त्वष्टुरिव तक्ष्ण इव धर्मो व्यापारो यस्य स । एनमक्रूर मन्दहासेनोक्षन्नार्द्रीकुर्वन् । तृक्षिताघा गताघा वल्लवीर्निक्षन् चुम्बन् ॥—घोषदिति । ६५३ घुषिर् अविशब्दने । ऋदित्येके । अर्हान्ता उदात्तेत शिषिवर्जमनुदात्ता । आविष्कृताभिप्राय वचन विशब्दनम् । तद्यतिरिक्तेऽर्थेऽयं धातु । सचार्थे शब्दमात्रे वा यथाप्रयोगमन्यो वा । अस्माच्छता । पङ्कजाक्ष । ६५४ अक्षू व्याप्तौ । सघाते च द्रुमे । अस्मादौणादिकेऽन्नन्तादक्षिशब्दात् समासान्त पच् । तक्षणे । ६५५ तक्षू ६५६ त्वक्षू तनूकरणे । तक्षेर्ल्युट् । त्वष्टृ । 'नप्तृनेष्टृत्वष्टृ–'इत्यादिना तृन्नन्तो निपातित । उक्षन् । ६५७ उक्ष सेचने । रक्षन् । ६५८ रक्ष पालने । निक्षन् । ६५९ णिक्ष चुम्बने । त्रिभ्य शता । तृक्षितेति । ६६० तृक्ष ६६१ ष्टृक्ष ६६२ णक्ष गतौ । तृक्षे कर्तरि क्त ॥

आस्तृक्षितोऽद्य वितनोषि महत्सुखं नो
नक्षत्रराडिव परं विकलङ्कवक्षाः ।
संमृक्षितोरुगुलमाक्षिकहृद्यवाच-
स्तक्षन्ति नाम शुचमिष्टकरा' सपक्षाः ॥ ८४ ॥

हे अक्रूर, आस्तृक्षित आगतस्त्वमद्य नो महत् सुख वितनोषि । नक्षत्रराट् चन्द्र इव । पर केवल विकलङ्कवक्षा विकलङ्क निर्दोष वक्षो हृदय यस्य स । चन्द्रस्तु सकलङ्कमध्य इत्येव भेद । तवास्मासु सुखकरणं न चित्रम् । यस्मात् सम्मृक्षितोरुगुलमाक्षिकहृद्यवाच· सम्मृक्षित· सघातीकृत उरुगुलो माक्षिक मधु च । ते इव हृद्यवाक् येषा तादृशा· प्रियतरा सपक्षा, बन्धव· शुचं तक्षन्ति नाम च्छादयन्ति खलु ॥—आस्तृक्षिता इति । ष्टृक्षे कर्तरि क्त । नक्षत्रेति । 'अमिनक्षियजि–' इत्यादिना नक्षेस्त्रन् । वक्ष इति । ६६३ वक्ष रोषे । सघात इत्येके । सघातीभवन्त्यस्थीन्यत्रेति असुन् । सम्मृक्षेति । ६६४ मृक्ष सघाते । म्रक्ष इत्येके । मृक्षे कर्मणि क्त । माक्षिकेति । 'पिपीलिकेतिकहृदिकमक्षिकाद्यप्' इति भोजेन निपातिता मक्षिका । तस्मात् 'तेन कृतम्' इत्यर्थे अण् । तक्षन्ति । ६६५ तक्ष त्वचने । तच्च सवरण त्वचो ग्रहणं वा । ग्रहणमात्रे च द्रुमे । पक्षेत्यप्येके । तक्षेर्लट् । पक्षेति । पक्षेरच् ॥

सूक्ष्र्ये त्वदीक्षा चिरकाङ्क्षिता नो वाङ्क्षाम्यमाङ्क्ष्यान्न तु नीचलोकान् ।
द्राक्षां जनो वाञ्छति नो फलानि ध्राङ्क्षद्ध्रुध्वाङ्क्षविदूषितानि ॥ ८५ ॥

१ माधवस्तु 'कुन् शिल्पिसञ्ज्ञयो' इत्यनेन कुनि मक्षिकारूपसिद्धिमाह.

इत्युक्तोऽसौ सुरकाषिण सुरहिंसाशीलान् असुरान् खषितु हिंसितुं शीलं यस्य तं श्रीकृष्णमूचे । किमूचे तत्राह—क्षपादिवपुषे ते नमोऽस्तु । कीदृशाय । जगत शेषकान् हिंसकान् नित्यं जषते हिंसते । रक्षश्चम्वा शाषिणे हननशीलाय । वषणे हिंसने उत्सुकान् केश्यादीन् प्रषमते हिंसते । अन्यान् भषत श्वरवसमशब्दं कुर्वतः पिशुनोक्ति वा कुर्वतो रेषो हिंसकान् भूयोऽपि रोषिष्यते हनिष्यते । कमलाया लक्ष्म्या कोष्णस्तनं जोषते सेवमानाय ॥—सुरकाषिखाषिणमिति । **६८५ कष ६८६ खष ६८७ शिष ६८८ जष ६८९ झष ६९० शष ६९१ वष ६९२ मष ६९३ रुष ६९४ रिष** हिंसार्था । कषिखष्योर्णिनि । शिषेर्ण्वुल् । जषे शता । झषेर्घञर्थे कः । शषेर्णिनि । वषेर्ल्युट् । मषे शता । रुषेर्लृटि शता । रिषे 'अन्येभ्योऽपि दृश्यते' इति विच् । भषत । **६९५ भष** भर्त्सने । तच्चेह श्वरव । पिशुनोक्तौ च द्रुमे । शता । उष्णेति । **६९६ उष** दाहे । 'इण्सिञ्जिदीडुष्यविभ्यो नक्' इति नक् । जेषते । **६९७ जिषु ६९८ विषु ६९९ मिषु** सेवने । जिषे शता ॥

> वेषैर्मेष्यतमैः प्रपोषदशुभप्रश्रेषिभिः श्लेषति
>
> प्रोष्यान्प्लुष्टजनान्कृपामृतपृषद्वर्षी भवान्दानवान् ।
>
> सामर्षं परघर्षिणोऽपि हृषितास्त्वां नोपयान्त्याहवे
>
> तोसह्रासविहीनशङ्खजनितह्लासाद्रसद्दिक्तटम् ॥ ८८ ॥

भवान् वेषैर्मत्स्यादिरूपैर्दानवान् श्लेषति भस्मीकरोति । कीदृशो भवान् । कृपारूपस्यामृतस्य पृषत बिन्दुं वर्षितुं शील यस्य स. । कीदृशैर्वेषै । मेष्यतमैः सर्वैरुपास्यतमैः । प्रपोषन्तं वर्धमानमशुभ प्रश्रेषितु दग्धु शील येषा तै. । कीदृशान् दानवान् । प्रोष्यान् भस्मीकर्तुं योग्यान् । प्लुष्टा दग्धा जना यैस्तान् । सामर्षं सक्रोधं यथा तथा परान् घर्षितुमभिभवितु शील येषा तेऽपि हृषिता प्रतिहता आहवे त्वा नो उपयान्ति । कीदृश त्वाम् । तोसस्य शब्दस्य ह्रासेनाल्पतया विहीनो य. शङ्खस्तेन जनितात् ह्लासात् शब्दाद्धेतो रसन्त. शब्दायमाना दिक्तटा यस्य तम् ॥—वेषैरिति । विषेर्घञ् । मिषेर्ण्यत् । प्रपोषदिति । **७०० पुष** पुष्टौ । शता प्रश्रेषिभि । **७०१ श्रिषु ७०२ श्लिषु ७०३ प्रुषु ७०४ प्लुषु** दाहे । श्रिषेर्णिनिः श्लिषे लट् । प्रुषेर्ण्यत् । प्लुषे कर्मणि क्त । पृषदिति । **७०५ पृषु ७०६ वृषु ७०७ मृषु** सेचने । आद्यौ हिंसाक्लेशयोश्च । मृषु सहने च । मृषु हिंसाक्लेशदैन्येष्वित्येके । पृषे. 'वर्तमाने पृषद्बृहत्' इत्यतो निपातित. । वृषेर्णिनि. मृषेर्घञ् । परघर्षिण । **७०८ घृषु** संघर्षे । णिनिः । हृषित. । **७०९ हृषु** अलीके । तुष्टौ च द्रुमे । कर्तरि क्त. । 'हृषेर्लोमसु' इतीड्विकल्प । तोसह्रासेति । **७१० तुस ७११ ह्रस ७१२ ह्लस ७१३ रस** शब्दे । ह्रसिरल्पीभावेऽपि । तुसिह्रस्योर्घञ् । ह्लसेरपि घञ् । रसे. शता ॥

सोऽप्यूचे शवतां गतस्य शशिवंशोत्थस्य भोजेशितु-
र्वृत्तं प्रस्तुतमत्र शस्त्रनिलये शस्तं च चापोत्सवम् ।
चाहेनामहितस्य चास्य निधनोद्योगं रहस्यूचिवा-
नन्तव्यं खलु रंहसेति च दृढामाज्ञां प्रभोरभ्यधात् ॥ ९१ ॥

सोऽपि भोजेशितुर्वृत्तमत्र शस्त्रनिलये चापोत्सवं प्रस्तुतं चोच उक्तवान् । कीदृशस्य कंसस्य । शवता गतस्य मृतप्रायस्य शशिवंशादुत्थितस्य जातस्यास्य निधनोद्योगं च रहस्यूचिवान् । चाहेन दम्भेन शाठ्येन चामहितस्यापूजितस्य निन्दितस्य रहसा गन्तव्यं खलु इति । प्रभोर्दृढामाज्ञामभ्यधात् चाभिहितवांश्च ॥—शवतामिति । ७२५ शव गतौ । अजन्तात्तल् । शशीति । ७२६ शश प्लुतगतौ । अजन्तान्मत्वर्थीय इनिः । शस्त्रेति । ७२७ शसु हिंसायाम् । 'सर्वधातुभ्य ष्ट्रन्' इत्यौणादिक ष्ट्रन् । शस्तम् । ७२८ शंसु स्तुतौ । हिंसायामित्येके । कर्मणि क्त । 'अनिदिताम्' इति नलोप. । चाहेन । ७२९ चह परिकल्कने । घञ् । अमहित । ७३० मह पूजायाम् । कर्मणि क्त । रहसि । ७३१ रह त्यागे । रंहसा । ७३२ रहि गतौ । द्वयोरसुन् । दृढाम् । ७३३ दृह ७३४ दृहि ७३५ बृह ७३६ बृहि वृद्धौ । बृहिर् इत्येके । बृहि शब्दे च । स च गजशब्द । दृहे 'दृढ. स्थूलबलयो.' इति निपातित. क्त ॥

तच्छ्रुत्वा परिदृंहितादरमसौ नन्दो वृहद्भोजनै-
र्यानैरप्युपबृंहितो विहितवान्प्रातः प्रयातुं मनः ।
गोविन्दस्तुहिनांशुरम्यवदनः कंसं जगद्दोहिनं
प्रोहिष्यञ्जगदर्हणीयमहिमा मोदेन निन्ये निशाम् ॥ ९२ ॥

असौ नन्द परिदृंहितादर परिवृद्ध आदरो यत्र तथा तच्छ्रुत्वा वृहद्भोजनैर्यानैरप्युपबृंहित. पूर्ण. सन् प्रात. प्रयातु मनो विहितवान् । गोविन्दो जगद् दोहितुं मर्दयितु शीलं यस्य तादृशं कस प्रोहिष्यन्नधिकमर्दयिष्यन् निशा मोदेन निन्ये नीतवान् । जगतामर्हणीयो महिमा यस्य तादृशो गोविन्द ॥—परिदृंहितेति दृंहे । वृंहे कर्तरि क्त. । वृहदिति । वृहे. 'वर्तमाने पृषद्बृहद्' इति वृहेरतिर्निपातित । उपबृंहित इति । वृंहेः कर्तरि क्त । तुहिनेति । ७३७ तुहिर् ७३८ दुहिर् ७३९ उहिर् अर्दने । 'वेपितुह्यो.' इति तुहेरिनच् । जगद्दोहिनमिति । दुहिरो णिनि । प्रोहिष्यन्निति । उहिरो लृटः शता । अर्हणीयेति । ७४० अर्ह पूजायाम् । योग्यत्वेऽपि अनीयर् । घुषादय उदात्तेत शिषिवर्जमुदात्ता ॥

इति सव्याख्याने धातुकाव्ये प्रथम सर्ग. ।

कीदृशैर्गोपकुलै॰ । अशर्धनैः कुत्सितशब्दमकुर्वाणैः । कृपास्यन्देन कृपामृतप्रवाहेण सम्यक्क्लृप्तो मोदो येषा तै ॥—अभ्रस्तेति । भ्रंसे कर्तरि क्त । विस्रम्भेति । ७५७ स्रम्भु विश्वासे । घञ् । प्रवृत्त इति । ७५८ वृतु वर्तने । कर्तरि क्त । अभिवृद्धौ । ७५९ वृधु वृद्धौ । क्तिन् । अशर्धनै । ७६० शृधु शब्दकुत्सायाम् । युच् । स्यन्देति । ७६१ स्यन्दू प्रस्रवणे । घञ् । सुक्लृप्तेति । ७६२ कृपू सामर्थ्ये । सामर्थ्यं शक्तिर्योग्यता वा । अन्तर्गतण्यर्थात् कर्मणि क्त । 'कृपो रो ल॰' इति कुत्वम् । द्युतादय उदात्ता अनुदात्तेतः । वृत् । द्युतादयो वृत्ता इत्यर्थ । वृदिति वृतेर्भूते क्विप् ॥

अतिप्रियस्य भगवत प्रस्थाने गोपीना वृत्तमाह—

गोपीघटाः प्रव्यथितास्तदानीं पृथूपतापप्रसमानचिन्ताः ।
मृदुस्वभावाः स्खदिताः स्मरास्त्रैः प्रक्षञ्जिते प्राणसमे विषेदुः ॥ ४ ॥

गोपीना घटा समूहास्तदानीं प्राणसमे प्रियतमे श्रीकृष्णे प्रक्षञ्जिते गते विषेदु । कीदृश्य । प्रव्यथिता भीता, दुःखिता वा । पृथुनोपतापेन पीडया प्रसमाना वर्धमाना चिन्ता यासा ता अतीक्ष्णस्वभावा॰ । स्मरास्त्रै स्खदिता विदारिताः ॥—घटा इति । ७६३ घट चेष्टायाम् । क्वचित्संगमादौ । एतदादयः फणान्ता 'घटादयो मित' इति मित॰ । आदितस्त्वरान्ताना तु 'घटादय षित॰' इति षित्वम्, अनुदात्तेत्त्वं च । घटे षित्त्वात् । 'षिद्भिदादिभ्य॰' इति सगच्छन्तेऽत्र समूहिन इत्यधिकरणेऽङ् । प्रव्यथितेति । ७६४ व्यथ भयचलनयो । दुःखचलनयोरित्येके । कर्तरि क्त । पृथु इति । ७६५ प्रथ प्रख्याने । विस्तारेऽप्यस्ति । 'प्रथिम्रदिभ्रस्जा सम्प्रसारणं सलोपश्च, इत्युप्रत्यय । प्रसमानेति । ७६६ प्रस विस्तारे । शानच् । मृदु इति । ७६७ म्रद मर्दने । म्रदे प्राग्वदुप्रत्यय । स्खदिता । ७६८ स्खद स्खदने । विदारणं तत् । ण्यन्तात् कर्मणि क्त । मित्त्वाद्ध्रस्व । प्रक्षञ्जितेति । ७६९ क्षजि गतिदानयो॰ । क्षज इत्येके । क्षञ्जे कर्तरि क्त ॥

दक्षापरेणात्तकृपेण तासामकान्दि चेतः कदनैः स्मरेण ।
शरीरमक्रान्दि वचोऽपि वेगादक्लान्दि चक्रे मरणत्वरापि ॥ ५ ॥

स्मरेण तासा चेत कदनैर्विक्लवीकरणै । पीडाभिरिति यावत् । अकान्दि विक्लवीकृतम् । शरीरमक्रान्दि । वचोऽप्यक्लान्दि । उभयत्रापि पूर्ववदर्थ । मरणत्वरापि चक्रे । कीदृशेन । दक्षाया हिंसाया परेण त्यक्तकृपेण ॥—दक्षेति । ७७० दक्ष गतिहिंसनयो । 'घटादिषु त्विहापूर्वपठिता॰ सर्वदा मित । वहि स्थस्येह पाठे तु मित्त्वमुक्तेऽर्थ एव हि ॥' इत्युक्तेर्न्द्व्यर्थतया प्राक्पठितस्य दक्षेरनयोरर्थयोर्मित्त्वम् । षित्त्वादङ् । कृपेति । ७७१ क्रप कृपाया गतौ च । 'क्रपे सम्प्रसारणं च' इति भिदादिपाठात् सम्प्रसारणमङ् च । अकान्दि । अक्रान्दि । अक्लान्दि । ७७२ कदि ७७३ क्रदि ७७४ क्लदि वैक्लव्ये । वैकल्य इत्येके । त्रयोऽप्यनिदित इत्यन्ये । इदिता कन्दादीनां णिजन्तात् कर्मणि चिणि

क्रियासामान्यार्थत्वादनेकार्थत्वाच्च 'अस्यायमर्थः' इति नोच्यते । नोच्यत इत्यवचनमर्थ इत्यन्ये । अस्माल्लट् । अकिताय । ७९२ अक ७९३ अग कुटिलायां गतौ । अके कर्तरि क्तः ॥

पीडातिशयादक्रूरं शपन्ति—

अगन्मनीषः कणयन्मुकुन्दमस्मान्वियोगं रणयन्स दूतः ।

चणन्विपादं विशणन्विचिन्तां श्रणन्विमोहं श्रथितोऽस्तु सद्य. ॥ ९ ॥

मुकुन्दं कणयन् गमयन् । हेतौ शता । तस्माद्धेतो । अस्मान् वियोगं रणयन् प्रापयन् । तत एव विपादं चणन्, विचिन्ता विशणन्, विमोहं श्रणन् । त्रिपु प्रयच्छन्नित्यर्थः । अस्तम्यमित्यर्थात् । स दूत सद्य श्रथितो हिंसितोऽस्तु । कीदृशः । अगन्ती कुटिलीभवन्ती मनीपा यस्य स ॥—अगदिति । अगे शता । कणयन् रणयन्निति । ७९४ कण ७९५ रण गतौ । द्वयोर्णौ शता । चणन् विशणन् श्रणन्निति । ७९६ चण ७९७ शण ७९८ श्रण दाने च । एपां शता । श्रथित । ७९९ श्रथ ८०० श्लथ ८०१ क्रथ ८०२ क्लथ हिंसार्थाः । श्रथेः कर्मणि क्तः ॥

सर्वरक्षिणो भगवत स्वरक्षादोपमाशङ्क्य परिहरन्ति—

श्लथ्यात्मना क्राथयताच्युतेन किं नाङ्गजो नः क्लथयन्नचानि ।

वनाम किं प्रज्वलितो हरेण सोऽद्यापि यद्विह्वलयत्यनङ्गः ॥ १० ॥

श्लथ्यात्मना हिंस्यस्वरूपान् क्राथयता । 'जासिनिप्रहण—' इति कर्मणि पष्ठी । अच्युतेन नोऽस्मान् क्लथयन् हिंसन् अङ्गज किं न अचानि कस्मान्न हिंसित । हरेण प्रज्वलित सोऽनङ्गोऽद्यापि विह्वलयति यत् यस्मात् तस्मात् किं वनाम करवाम । न किंचित् ॥—श्लथेर्ण्यत् । क्राथेर्णिजन्ताच्छता । 'जासिनिप्रहणनाटक्राथ—' इति निपातनाद्दीर्घ । क्लथेर्णौ शता । श्लथादीनां णिजन्तानामपि हिंसामात्रमर्थ । जास्यादिसूत्रे हिंसायामित्युक्ते । 'हन्त्यर्थाश्च' इति चुरादिपाठाद्वा । अचानि । चन च । हिंसार्थ इति शेप । अस्माण्णौ चिण् । वनाम । ८०३ वनु च नोच्यते । कणिवदयमपि क्रियासामान्याद्यर्थ इत्यर्थ । अस्माल्लोट् । प्रज्वलित । ८०४ ज्वल दीप्तौ । णौ कर्मणि क्तः । विह्वलयति । ८०५ ह्वल ८०६ ह्मल चलने । ह्वलेर्णौ लट् ॥

भगवतो वाल्यकृत दुर्ललितत्वमप्यतिदुर्विस्सरमित्याह—

प्र(अ)ह्मल्यचित्ता स्मरयत्यसौ मां नन्दात्मजः संदरकः खलानाम् ।

अनारि येन श्रपितं पयोऽपि वालैर्मुहुः संज्ञपितासुरेण ॥ ११ ॥

असौ नन्दात्मजो मां स्मरयति सोत्कण्ठं ध्यापयति । खलानां सदरको भीषयिता ।

१. अत्र पुस्तकद्वयेऽपि सर्वत्र 'कृथ्यात्मना' इति पाठः. श्रथ-श्लथेत्यत्रापि क्रथेति पाठः.

शमेर्णौ लङ् । कर्मणि तप । कामयते इति । 'न कम्यमिचमाम्' इत्यमित्त्वे मिति ह्रस्वः ॥

दर्शनमेव प्रार्थयमाना विरमन्ति—

शमामयन्त्य क्षिपतस्तृण गाः प्रणामयन्त्य क निशामयेयम् ।

निशम्यया मञ्जुगिरा कदा नः स यामयेद्या यमनादिकार्ये ॥ १८ ॥

त क काले देशे वा निशामयेय पश्येयम् । कीदृशं तम् । क्षिपत आमयन्तं पीडय न्तम् । गास्तृणं प्रणामयन्तमास्वादयन्तम् । स निशम्यया भाम्यया मञ्जुगिरा कदा नो यम नादिकार्ये परिवेषणादिकर्मणि यामयेत् व्यापारयेत् ॥—आमयन्तमिति । अमेर्णिचि शतरि मित्त्वाभावे दीर्घः । प्रणामयन्तमिति । णमेः प्राग्वत् । निशामयेयमिति । ८१८ 'शमो दर्शने' इत्यमित्त्वे णौ लिङ् । निशम्यया । अदर्शनार्थत्वेन मित्त्वे मिति ह्रस्वः । यामयेत् । ८१९ 'यमोऽपरिवेषणे' इत्यमित्त्वे णौ लिङ् । व्यापारणार्थः । यमनेति । परिवे षणार्थे णौ मित्त्वे ल्युट् ॥

तत्र गोपीविलापमुपसंहरति—

इत्याद्यवस्थाभिवमानसाला बाला परिस्तादिवधैर्यबन्धा ।

दुधानपस्नावृषिषु प्रयाते कृष्णे विलेपु फणिता विमोहम् ॥ १९ ॥

कृष्णे दुधानपस्नावषिर्तु विहारविषु प्रयाते सति । ता बाला विमोह फणिता प्राप्ता इत्यादि विलेपुः । कीदृश्यः । अवस्थाभिर्विहारिर्त मानसं यासां ताः । परिस्ता सितो नाशितो धैर्यबन्धो यासां ताः ॥—अवस्थाभिरिति । ८२० 'स्खदिर् अवपरिभ्यां च' इति मित्त्वनिषेधाण्णिचि दीर्घे कर्मणि क्तः । परिस्खादितेति तद्वत् । अपस्खादयि तुमिति । अपाच्च परिभ्यां चेत्येके इत्यपात् परस्य स्खदेरमित्त्वे णिचि तुमुन् । फणिता इति । ८२१ फण गतौ । कर्तरि क्तः । इट् गत्यर्थेति । अत एव उदात्ता उदात्तेत् ॥

प्रस्थितस्य भगवतः श्रीकृष्णस्यावस्थामाह—

कृष्णोऽपि रेजे पथि गोपबालैर्भ्राजिष्णुभिर्भ्राशितपार्श्वदेशः ।

विभ्राजितेऽक्रूररथे सरामः समस्यमोदस्तनमाजि विष्टम् ॥ २० ॥

कृष्णोऽप्यक्रूररथे सराममधिष्ठन् पथि रेजे । भ्राजिष्णुभिः शोभमानैर्गोपबालैर्भ्रा शितपार्श्वदेशः शोभितपार्श्वभागः । समस्यमोदस्य शब्दायमानमेघस्य स्तनमिव स्वनं भ जमानं यथा भवति यतस्मिन् रथे ॥—रेजे इति । ८२२ राजृ दीप्तौ । उदात्तः स्वरितेत् । अस्माल्लिटि 'फणां च सप्तानाम्' इत्येत्वाभ्यासलोपविकल्पः । ८२३ टुभ्राजृ ८२४ टुभ्राशृ ८२५ टुभ्लाशृ दीप्तौ । उदात्ता अनुदात्तेत । भ्राजेः भ्रंशकृप् भाविना ताच्छील्ये इष्णुच् । भ्राशितभ्राशितेति । इतो कर्तरि क्तः । समस्येति । ८२६ स्यमु ८२७ स्वन ८२८ ध्वन शब्दे । समानता उदात्ता अनुदात्तेत । स्यमे' पचा । स्वनेति स्वनहसोर्वा इत्यप् । स्वनान्ता' अत्र घटादयः ॥

गोपैर्ध्वनद्भिः समितैर्वृतोऽपि देवो न तस्ताम विचिन्त्य गोपीः ।
ज्वालेन तापेन चला जडाङ्गीरटालशोकद्वलितप्रतापाः ॥ २१ ॥

ध्वनद्भि शब्दायमानैः समितैरविक्लवीभवद्भिर्गोपैर्वृतोऽपि देवो गोपीर्विचिन्त्य न तस्ताम अविक्लवीबभूव पीडित एवासीत् । ज्वालेन दीप्तेन तापेन सतापेन चला कम्पिता । जडान्यसमर्थान्यङ्गानि यासा ताः । अटालेन पूर्णेन शोकेन द्वलिता विक्लीभूता प्रलापा यासा ताः ॥—ध्वनद्भिरिति । ध्वने. शता । समितै. । ८२९ षम ८३० ष्टम अवैक्लव्ये । समे कर्तरि क्त । तस्ताम । स्तमेर्लिट् । ज्वालेन । ८३१ ज्वल दीप्तौ । 'ज्वलितिकसन्तेभ्य' इति णः । चला. । ८३२ चल कम्पने । पचाद्यच् जडेति । ८३३ जल धान्ये । धान्यमतैक्ष्ण्यम् । अच् । लडयोरभेदाद् । अटालेति । ८३४ टल ८३५ द्वल वैकल्ये । टलेर्ण । द्वले कर्तरि क्त ॥

स्थलीर्हली सन्नलिनीश्च तीर्त्वा पलन्हरिश्चात्मवलप्रपोलः ।
कुलीरशालह्वलिताम्बुपूरह्मलत्पतङ्गां यमुनामवाप्तौ ॥ २२ ॥

पलन् हरिर्हली चोभौ स्थली सन्नलिनीश्च तीर्त्वा यमुनामवाप्तौ । पलन् गच्छन् । स्थलीरकृत्रिमदेशान् । अवाप्तौ प्राप्तौ । आत्मवलेन स्ववलेन प्रपोलो महान् कुलीराणा कर्कटकाना शालेन गमनेन ह्वलिते चलिते अम्बुपूरे जलपूरे ह्मलन्तो गच्छन्त पतङ्गाः पक्षिणो यस्या ता यमुनाम् ॥—स्थलीरिति । ८३६ ष्ठल स्थाने । अस्मादचि स्थलम् । स्थलशब्दात् 'जानपदकुण्डगोणस्थल–' इत्यादिना अकृत्रिमार्थे ङीपि स्थली । हलीति ८३७ हल विलेखने । कर्षणं तत् । अचि हल तस्मात् 'अत इनि' इतीनि । नलिनीरिति । ८३८ णल गन्धे । बन्धन इत्येके । अस्मात् 'बहुलमन्यत्रापि' इति कठिनवदिनचि नलिनम् । तस्मादिनौ ङीप् । पलन् । ८३९ पल गतौ । शता वलमिति । ८४० बल प्राणने धान्यावरोधने च । धान्यावरोधनं कुसूलादिव्यापार । अस्मादचि वलम् । प्रपोल इति । ८४१ पुल महत्त्वे । ज्वलादिण. । कुलीरेति । ८४२ कुल सस्त्याने बन्धुषु च । सतान इत्येके । सस्त्यानं सघात । अस्मात् सघाती भवतीति 'कुलेश्च मोज ।' इतीरक् । शालेति । ८४३ शल [ह्वल ह्मल] ८४४ हुल ८४५ पत्ल गतौ । शलेर्घञ् । ह्वलितेति । ह्वले कर्तरि क्त. । ह्मलदिति । ह्मले. शत पतङ्गेति । 'पतेरङ्गच् पक्षिणि' इत्यङ्गच् ॥

यमुना वर्णयति षड्भि.—

अह्मोलसरवा रविरश्मिजालेऽप्यविकथन्ती तटपाथिपाथाः ।
तापं मथन्ती कणिका वमन्ती भ्राम्यत्तरङ्गा क्षरति स्फुटं या ॥ २३ ॥

१. धातुपाठे तु 'घातने' इति पाठ . २ स्थलेति धातुपाठपाठ ३. 'ह्वलतेर्ह्मलतेश्च घटादिपठितस्येह पाठो णविकल्पार्थ . घटादिपाठस्त्वर्थविशेषे मित्वार्थ इति बोद्धव्यम्' इति माधवग्रन्थानुरोधेन ह्वलह्मलौ पठितौ इति बोध्यम्.

हिक्क अव्यक्ते शब्दे । शता । अञ्चमानै । अचद्भि । ८६२ अञ्चु गतौ याचने च । अचु इत्येके । अचु गतावित्यन्ये । अञ्चे शानच् । अचे शता । याचमानै । ८६३ डु याचृ याच्ञायाम् । डु याचृ इत्येके । शानच् । रेटदिति । ८६४ रेटृ परिभाषणे । याचने च द्रुमे । शता । चातकै । ८६५ चते ८६६ चदे याचने । चतेर्ण्वुल् । चायम् । चदेर्ण्यत् । प्रोथति । ८६७ प्रोथृ पर्याप्तौ । अयं शब्दार्थोऽपि । अपपूर्वस्तु मारणे हुङ्करणे वा । अस्माल्लट् ॥

यमुनाया अतिपुण्यत्वं शैत्यातिशयं चाह—

नित्यं प्रमोहामिदितोरुमेदैः प्रमेधिता सद्भिरनिद्यमानैः ।
या नेदितोर्वीपरिशर्धिवीचीविमृद्धवृक्षादिविवोध्यशैत्या ॥ २६ ॥

या सद्भिर्नित्यं प्रमेधिता सगता । प्रमोहेणामिदितोऽपीडित उरुमेदो मेघा येषा तैः सद्भिः । अनिद्यमानैरकुत्स्यमानैः । नेदितोर्वी नेदिता समीपभूतामुर्वीं भुवं परिशर्धितुमुन्दितुं सेक्तुं शीलं यासा ताभिर्वीचीभिर्विमृद्धैरुन्दितैर्वृक्षादिभिर्विवोध्य शैत्य यस्या सा ॥—अमिदितेति । ८६८ मिदृ ८६९ मेदृ मेधाहिंसनयोः । मिथृ मेथृ इत्येके । मिधृ मेधृ इत्यन्ये । ८७० मेधृ सगमे च । मिदे कर्मणि क्त । अनिद्यमानै । ८७१ णिदृ ८७२ णेदृ कुत्सासनिकर्षयो । निदेः कर्मणि शानच् । नेदितेति । नेदे कर्तरि क्तः । परिशर्धि, विमृद्ध इति । ८७३ शृधु ८७४ मृधु उन्दने । शृधेर्णिनिः । मृधेः कर्तरि क्त । विवोध्येति । ८७५ वुधिर् वोधने । तत्तु ज्ञानमेव । अस्माण्ण्यत् ॥

प्रवुन्ध्यवेणीजववेनमाना खातान्तिका चीवरिभिर्निषादैः ।
चाय्या व्ययद्दाशविलोकभेषभ्रेषज्झषा यासदघं स्पशन्ती ॥ २७ ॥

या अघं स्पशन्ती परिहरन्ती आसदशोभत । प्रवुन्ध्येन दर्शनीयेन वेणीजवेन प्रवाहवेगेन सह वेनमाना गच्छन्ती । चीवरिभि पटचरवद्भिर्निषादै खातान्तिका । चाय्या पूज्या । दर्शनीया वा । व्ययता गच्छता दाशाना विलोकेन यो भेषो भयं तेन भ्रेषन्त सचरन्तश्चलन्तो झषा यस्या सा ॥—प्रवुन्ध्येति । ८७६ उवुन्दिर् निशामने । दर्शनं तत् । ण्यत् । वेणीति । ८७७ वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेनृ इत्येके । वादित्रग्रहणं वाद्याना वादनार्थमादानम् । अस्मादौणादिके इनि 'कृदिकारादक्तिनः' इति ङीष् । वेनमाना । वेने शानच् । खातेति । ८७८ खनु अवदारणे । कर्मणि क्त । चीवरिभि । ८७९ चीवृ आदानसवरणयो । अनुदिदित्येके । अस्मादुणादौ 'छित्वरच्छत्वर—' इत्यादिना निपातितश्चीवरशब्द । अत इनि । चाय्या ८८० चायृ पूजानिशामनयोः । ण्यत् । व्ययदिति । ८८१ व्यय गतौ । शता । वित्तत्यागे त्वस्य नित्य तद्न्तैव । दाशेति । ८८२ दाशृ दाने । 'दाशगोघ्नौ सप्रदाने' इत्यच् । भेषेति । ८८३ भेषृ भये । अगतावित्येके । घञ् । भ्रेषदिति । ८८४ भ्रेषृ गतौ । चलन इत्येके ।

९०३ ग्लै ९०४ म्लै हर्षक्षये। हर्षक्षय शक्तिक्षयः। ग्लैधातो कर्तरि क्त । 'संयोगादे'—' इति निष्ठानत्वम् । म्लानिम् । म्लायते. 'ग्लाम्लाज्याहाभ्यो निर्वाच्य ' इति नि । था- नेति । ९०५ द्यै न्यक्करणे । न्यङ्कविधान इत्येके । कुत्सिताङ्गकरण तत् । कर्मणि क्त । आध्वनत्वम् । निद्रायदिति । ९०६ द्रै स्वप्ने । शता । अघ्राणेति । ९०७ घ्रै तृप्तौ । कर्तरि क्तः । धीरिति । ९०८ ध्यै चिन्तायाम् । क्विपि 'ध्याप्यो' संप्रसारणम्' इती- त्वम् ॥

भगवद्दर्शनकौतुकेन जलादुन्मग्नस्यावस्थामाह—

रायद्ध्वयस्त्यानरुचौ रथेऽपि तं भक्तितिष्ठापयिषुं स दृष्ट्वा ।

खाताशयोऽक्षाममुदा पुनश्च मग्नोऽन्यथापश्यदजानमीशम् ॥ ३१ ॥

स त भक्ते तिष्ठापयिषु सघातीकर्तुं वर्धयितुमिच्छु सन्तं रथेऽपि दृष्ट्वा । अक्षाम- मुदा पूर्णमोदेन पुनश्च पुनरपि मग्न' सन्नीशमन्यथा अपश्यत् । रायद्ध्वये शब्दायमानाश्वे स्त्यानरुचौ प्रवृद्धशोभे रथे खाताशय स्थिरीभूतमना अगाधमना वा अजानमक्षयं नित्यम् ॥—रायदिति । ९०९ रै शब्दे । शता । स्त्यानेति । ९१० स्त्यै ९११ ष्ट्यै शब्दसघातयो । आद्यात् कर्तरि क्त । नत्वम् । तिष्ठापयिषुम् । द्वितीयाण्णिजन्तात् सन्यु । 'स्तौतिण्योरेव—' इति षत्वम् । तदर्थमेव षोपदेशस्य पाठ' । खातेति । ९१२ खै खदने । तच्च स्थैर्यहिंसे । 'खै खनने' इत्येव शंकराचार्य । तस्मात् कर्तरि क्त । अक्षामेति । ९१३ क्षै ९१४ जै ९१५ षै क्षये । क्षैधातो कर्तरि क्ते 'क्षायो म ' इति मत्वम् । अजानन् । जैधातोर्ल्युट् ॥

अन्यथेत्युक्त रूपं वर्णयति—

प्रसातकातर्यसुरोपगीतं पूज्यं श्रृतास्राणहविर्विशेषै. ।

आपातमाल्यं शयितं सुवानकाशत्विषि स्तातनौ फणीन्द्रे ॥ ३२ ॥

प्रसातकातर्यै. प्रक्षीणभयै सुरैरुपगीतं स्तुतं श्रृतास्राणैः पक्वापक्वैश्चरुपुरोडाशक्षीरनव- नीतादिरूपैर्हविर्विशेषै पूज्यम् । अपातमशुष्कमम्लान माल्य यस्य तम् । सुवानकाशस्य सम्यक्शुष्ककाशमञ्जर्यास्त्विड्विवातिधवला शोभा यस्य तस्मिन् । स्ताता वेष्टिता कुण्ड- लीकृता तनुर्यस्य तस्मिन् । फणीन्द्रे शयितम् । ईदृशमीशमपश्यदिति पूर्वेणान्वय ॥— प्रसातेति । सायते. कर्तरि क्त । कातर्येति । ९१६ कै ९१७ गै शब्दे । कायते 'का- राभ्यान्तरन्' इति भोजोक्तरनि कातर. । तस्मात् ष्यञ् । उपगीतमिति । गायते श- ब्दविशेषार्थत्वात् सकर्मकात् कर्मणि क्त । श्र्तेति । ९१८ श्रै[2] ९१९ स्नै पाके । श्रा- यते 'श्रृतं पाके' इति निपात. । अस्राणेति । स्रैधातो कर्तरि क्ते यण्वत्त्वान्नत्वम् ।

१ 'ध्यायते संप्रसारणं च' इति वार्तिकेनेति सारम् यथाश्रुतस्य तु क्वनिपि सप्रसार- णविधायकस्योणादिसूत्रस्य 'धीवा' इत्युदाहरणम्. २. 'शै श्रै' इति धातुपाठे

अपावेति। ९२० पै ९२१ ओ वै शोषणे। पैधातो: कर्तरि क्तः। सुपानेति। पै-धातो प्राग्वत् क्त। ओविरत्रामसत्वम्। स्त्यायेति। ९२२ ष्टै वेष्टने। ९२३ ष्ट्यै इत्येके। ष्ट्यै शौच इत्यन्ये। ष्टैधातोः कर्तरि क्तः॥

एवम्भूतं पश्यतोऽक्रूरस्य आर्तिमाह—

ज्ञातावपदात् स पिबन्नुदग्रां जिघ्रन्सुगन्धं विषमप्रपानि।
तिष्ठन्निहास्मिन्नसितेन तमस्तौत्स्फुटेनाकृतधी स्वरेण ॥ २३ ॥

स ज्ञातावपदस्तः ज्ञातमावपदमस्य कुतः सन् उदग्रां पिबन् सुगन्धं जिघ्रन् विषमप्रपानि वि-धर्मस्थलमिह तिष्ठन् स्फुटेन स्वरेण तमस्तौत् स्तुतवान्। आत्मायग वेदपदम्। अकृता कुटिला धीर्यस्य सः॥—स्त्यायेति। ष्ट्यै शौचे। कर्तरि क्तः। अवपातः। ९२४ दैप् शोधने। पकारः अदाप् इति सामान्यग्रहणार्थः। शोधनं शुद्धिः। अस्मात् कर्तरि क्तः। पिबन्। जिघ्रन्। विषमम्। तिष्ठन्। ९२५ पा पाने। ९२६ घ्रा गन्धोपादाने। ९२७ ध्मा शब्दाग्निसंयोगयोः। इह शब्द उच्यते। अग्निसंयोगश्च मुखवायुना धमनया विभून्ने संतापेन पूरणे च। ९२८ ष्ठा गतिनिवृत्तौ। चतुर्णां शतरि 'पाघ्रा-इत्यादिना पिबत्यादेशाः। आम्रायेति। ९२९ म्ना अभ्यासे। प्राग्नेमाङ्पूर्वः। कर्मणि घञ्। इहवेति। ९३० दाण् दाने। 'पाघ्रा- इत्यादिसूत्रे दाणिति विशेषणार्थो णः। अस्मात् आतोऽनुपसर्गे कः। अकृतेति। ९३१ ह्वृ कौटिल्ये। कर्तरि क्तः। स्वरेणेति। ९३२ स्वृ शब्दोपतापयोः। अस्मात् गुण्यस्वान्त- इति सूत्रे स्वरेति निर्देशात्॥

स्मार्यं शुभद्वारमुपासरामि त्वत्पादमृच्छामि न मोहगर्तम्।
घृणास्तु ते विश्रुतभूरदैवभ्रुतालसितक्षुभ विश्वसोत ॥ २४ ॥

अहं त्वत्पादमुपासरामि प्राप्नोमि मोहस्य गर्तं न ऋच्छामि न प्राप्नोमि। स्मरो आ-ध्यानां भूतबन्ध' इति वचनात् प्रार्थनायां लट्। कीदृशं पादम्। स्मार्यं चिन्तनीयम्। शुभद्वारं शुभकरमित्यर्थः। विश्रुतभूरदैवभ्रुतालसितक्षुभः विश्रुतेभ्यो हिंसितेभ्य' भूर-देवेभ्यः कुबेराद्यैः रचितं सितक्षुभं यस्य तादृश हे विश्वसोतः जगत्कारणत्वात्सर्वस्य उत्पादकर्तः ईश्वर इति वा। तव घृणा दया मयि अस्तु॥—स्मार्यमिति। ९३३ स्मृ चिन्तायाम्। ण्यत्। द्वारमिति। ९३४ दृ वरण इत्यप्येके। घञ्। उपासरामि। ९३५ सृ गतौ। लट्। सर्त्तेर्धावादेशस्तु इतरत्राप्य। ऋच्छामि। ९३६ ऋ गति प्रापणयोः। लटि ऋच्छादेशः। गर्तम्। ९३७ गृ ९३८ घृ सेचने। असिप्रसिन्ताभि दसप्रभृतिभ्यस्तन्' इति कर्मणि तन्। तत्र गरतेरपि ग्रहणात्। घृणा। 'इण भूषस्भूष घृणादय' इति मोघोकेर्धरतेर्धः। विश्रुतेति। ९३९ ध्वृ हूर्च्छने। कौटिल्यं वत्।

१ आम्रा' इति पाठः २ 'भृ इति धातुपाठे.

हिंसार्थेऽप्यस्ति । कर्मणि क्त । ९४० स्नु गतौ । स्नुतौ च द्रुमे । श्रु स्रु गताविल्येके । 'शुसिचिमिजां दीर्घश्च' इति क्रन् । स्नुतेति । स्नुधातोः कर्तरि क्तः । सोतः । ९४१ षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञा । तृच् ॥

श्रुत्यन्तवाचा ध्रुवया प्रदूनं घोरद्रवच्चक्रजिताज्ञितारिम् ।

स्मितार्द्रवक्त्रं गवमानभूषं गै त्वां घुताशं कुतशङ्खघोषैः ॥ ३५ ॥

अहं त्वा गै प्राप्तं प्रार्थये । श्रुत्यन्तवाचोपनिषदा ध्रुवया नित्यया प्रदूनं ज्ञातम् । गत्यर्थोऽत्र ज्ञानार्थता । घोरं यथा तथा द्रवता चक्रेण जिता अभिभूता अज्ञिता अन्यैरनभिभूता अरयो येन तम् । स्मितेन मन्दहासेनार्द्रवक्त्रम् । गवमाना शब्दायमाना भूषा यस्य तम् । कुतशङ्खस्य शब्दायमानशङ्खस्य घोषैर्घुताशं शब्दितदिशम् ॥—श्रुतीति । ९४२ श्रु श्रवणे । 'श्रुयजिषिस्तुभ्यः करणे' इति क्तिन् । ध्रुवया । ९४३ ध्रु स्थैर्ये । बाहुलकात्कः । यद्वा 'ध्रुवमपाये' इति निर्देशात् साधुरिति माधव । प्रदूनम् । ९४४ दु ९४५ द्रु गतौ । दो कर्मणि क्त । 'दुग्वोर्दीर्घश्च' इति निष्ठानत्वदीर्घौ । द्रवदिति । द्रुधातो शता । जिताज्ञितेति । ९४६ जि ९४७ ज्रिं अभिभवे । 'जि ज्रि अभिभवे' इति लीलाशुक । जिज्र्यो कर्मणि क्त । धयत्यादयोऽनुदात्ता परस्मैभाषा । स्मितेति । ९४८ ष्मिङ् ईषद्धसने । नपुंसके भावे क्त । गवमानेति । ९४९ गुङ् अव्यक्ते शब्दे । शानच् । गै इति । ९५० गाङ् गतौ । लोट् । घुतकुतेति । ९५१ घुङ् ९५२ कुङ् ९५३ उङ् ९५४ ङुङ् शब्दे । कुङ् अव्यक्तशब्दार्थ इति केचित् । द्वयो कर्तरि क्त ॥

स्तोत्रावमानैर्दुतवेणुवीणैश्च्युताशुभैर्व्योमचरैर्ज्युतं ते ।

प्रवे भवाब्धिप्लवमारुतानां धृतामयं भक्तिनिमेयमङ्घ्रिम् ॥ ३६ ॥

अहं भक्तिनिमेयं भक्त्या निमेयं व्यत्यसनीयं दानपूर्वं परिग्राह्यं ते अङ्घ्रिं प्रवे प्राप्नोमि । कीदृशमङ्घ्रिम् । व्योमचरैर्दिव्यैर्ज्युतं प्राप्तम् । आरुताना प्राप्ताना धृतामयं ध्वस्तपीडम् । कीदृशैर्व्योमचरै । स्तोत्रेणावमानैः शब्दायमानैः । तथा दुता शब्दिता वेणवो वीणा च येषां तै । च्युतं गतमशुभं येषां तैः ॥—अवमानै । उङ्धातो शानच् । दुतेति । दुङ कर्तरि क्त । च्युतेति । ९५५ च्युङ् ९५६ ज्युङ् ९५७ प्रुङ् ९५८ प्लुङ् गतौ । क्लुङ् इति चैके । झुङ् इति चान्ये । च्युङ कर्तरि क्तः । ज्युतम् । ज्युङः कर्मणि क्त । प्रवे । प्रुङो लट् । प्लवम् । प्लुङ पचाद्यच् । आरुतानाम् । ९५९ रुङ् गतिरेषणयोः । रेषणं हिंसा । कर्तरि क्त । धृतेति । ९६० धृङ् अवध्वंसने । कर्तरि क्त । निमेयम् । ९६१ मेङ् प्रणिदाने । तच्च विनिमयः । प्रत्यर्पणं वा । अचो यत् ॥

दयस्व मां देव कृपाम्बुशीत प्यानौजसा त्रातजगत्त्रयं त्वाम् ।

पूताखिलं मूतबलिं सुडीतौ तार्क्ष्ये स्थितं प्राप्य तरामि मायाम् ॥ ३७ ॥

१. 'ज्रि' इति धातुपाठे. २ 'ङुङ्' इति धातुपाठे. ३. 'क्लुङ्' इति पाठ .

हे कृपाम्बुधीश येन त्वं मां दयस्व रक्ष । अहं त्वां प्राप्य मायां तरामि । ध्यानैर्मया मन्दपचेन परिपालितजगत्त्रयम् । मृगो नष्टो मक्षिर्येन तम् । पुरीतौ सोमभक्षणे तार्क्ष्ये स्थितम् ॥—दयस्वेति । ९६२ देङ् रक्षणे । छेत् । मीतेति । ९६३ श्यैङ् गतौ । कर्तरि च । द्रवमूर्तिस्पर्शयोः श्यः इति संप्रसारणम् । ध्यानेति । ९६४ ध्यैङ् वृद्धौ । प्राग्वत् क्तः । धन्यस्यामत्वम् । त्रातेति । ९६५ त्रैङ् पालने । कर्मणि क्तः । ष्णिङ्म्‌ दयोऽनुदात्ता आत्मनेभाषाः । पूतेति । ९६६ पूङ् पवने । सोपर्न तत् । कर्मणि क्तः । मूतेति । ९६७ मूङ् बन्धने । प्राग्वत् क्तः । पुरीतौ । ९६८ डीङ् विहायसा गतौ । क्विन् । पूङादय उदात्ता आत्मनेभाषाः । तरामि । ९६९ तॄ प्लवनतरणयोः । अभिभवे च हृये । अयं बलादाक्रमणस्या गमनम् । उदात्तः परस्मैभाषः । असाङ्क् ॥

अहं त्वां प्राप्य मायां तरामीत्युक्तम् । तत्र त्वत्कृपां विना त्वत्प्राप्तिरपि दुर्लभेत्याह—

जुगुप्सतेऽथाव्यसनं तितिक्षुर्मीमांसते ब्रह्म च यो महात्मा ।
स त्वद्बीभत्सितवृत्तिरर्थी तवारभेतापि कृपां लभेत ॥ ३८ ॥

योऽजस्रं जुगुप्सते अर्थं निन्दति । व्यसनं दुःखं तितिक्षुः क्षममाणो महात्मा च सन् ब्रह्म मीमांसते विचारयति । स खलु तवार्थमारभेत कृपां लभेत अपि । अबीभत्सित वृत्तिः बीभत्सितमन्येषां चित्तविकारो न यस्यां तादृशी वृत्तिर्व्यापारो यस्य सः ॥—जुगुप्सत इति । ९७० गुप गोपने । ९७१ तिज निशाने । ९७२ मान पूजायाम् । ९७३ बध बन्धने । एभ्यः क्रमात् निन्दायाम्, क्षमायाम्, पूजितविकारे दुर्गन्धादिना चित्तविकारे च सनुक्तः । निन्दाक्षमाव्याजचित्तविकारेषु धातोः पृथक्प्रयोगाभावात् योपमा धर्मकल्पे व्यर्थं इति हरदत्तादयः । 'गुप्तिज्किद्भ्यः सन्' इति सन् । एषामनुदात्तेत्त्वात् सनन्तस्यापि तङ् । ईकधात् गुपेर्नुट् । तितिक्षुरिति । तिजे सन्नुप्रत्ययः । मीमांसत इति । माने मान्बध- इति सनि अद् । अबीभत्सितेति । बधे सनि नपुंसके भावे क्तः । आरभेत । ९७४ रभ राभस्ये । उपक्रमार्थः । तत्रार्थं प्रयोगात्पूर्वं । लभेत । ९७५ डुलभष् प्राप्तौ । ह्रयो संभावने लिङ् ॥

त्वत्कृपया जितेन्द्रियाणां त्वं सुलभ इत्याह—

असत्कथोपेतपथं हिमाद्रिवन्निर्व्यपायैस्तव कन्दने वने वासे ।
यामादिकर्मैर्मनसाद्भुताधे सुप्योऽसि विष्णो यमिभिर्वितापे ॥ ३९ ॥

हे विष्णो त्वं यमिभिः सुप्योऽसि प्राप्योऽसि । असत्कथोपेतैरनाक्षिप्तपतीकैः । तदि पच्यभावात् पघ्ना हनेन पुरीपोत्सर्गेण ह्रदः स्वेदनैः अप्यपक्रमस्य कृताये यथ मृद्गृधैरस्कन्नोऽप्राप्तः अनभिभूतो वा वनान्ते वासो येषां ते । यामादिषु स्थायिभि कार्मैः ॥—असत्केति । ९७६ यत्र परिष्वङ्गे । कर्मणि क्तः । हनेति । ९७७ हद पुरीपोत्सर्गे । 'नपुंसके भावे क्तः' । रमादयोऽनुदात्ता अनुदात्तेतः । स्वेदादिति । ९७८

ञिक्ष्विद्। अव्यक्ते शब्दे । उदात्त उदात्तेत् । शता । अस्कन्निति । ९७९ स्कन्दिर् गतिशोषणयो. । कर्मणि क्त । यामेति । ९८० यभ विपरीते मैथुने । तत्र पुरुषायितम् । यभ मैथुन इत्येवैके । घञ् । नमनात् । ९८१ णम प्रह्वत्वे शब्दे च द्रुमे । ल्युट् । गतेति । ९८२ गम्लृ ९८३ सृप्लृ गतौ । गमे कर्तरि क्त । सृप्य । सृपे 'ऋदुपधाद्–' इति क्यप् । यमिभि । ९८४ यम उपरमे । उदिदिति केचित् । 'यम समुपनिविषु च' इति अवन्तान्मत्वर्थीय इनि । वितापे । ९८५ तप संतापे । घञ् ॥

अक्रूरस्य कृत्यशेषमाह—

त्यक्तार्तिरेवं तमसङ्गचेताः स्तुवन्नदृष्ट्वा च पुनः क्षणात्तम् ।
कृत्वा स कृत्यं दशनांशुगौरं कृष्णं ययौ दैत्यनिदाघमेघम् ॥ ४० ॥

स तमेवं स्तुवन् पुनस्त क्षणादृष्ट्वा च कृत्यमवश्यं कर्तव्य कृत्वा, दशनांशुगौर मन्दस्मितसितात्मान कृष्णं रथस्थ श्रीकृष्णं ययौ प्राप । त्यक्ता आर्तिर्येन स. । असङ्गं चेतो यस्य स । दैत्यरूपस्य निदाघस्य ग्रीष्मर्तो. मेघं वर्षर्तुम् । तन्नाशकमित्यर्थ ॥—त्यक्तेति । ९८६ त्यज हानौ । कर्मणि क्त । असङ्गेति । ९८७ षञ्ज सङ्गे । घञ् । अदृष्ट्वा । ९८८ दृशिर् प्रेक्षणे । क्त्वा । दशनेति । ९८९ दन्श दशने । दशनशब्देन दन्तार्थेन तत्क्रिया लक्ष्यते । 'दंशे करणे ल्युटि नलोपो वाच्य' इति नलोप । कृष्णमिति । ९९० कृष विलेखने । विलेखनमिहाकर्षणम् । 'कृषेर्वर्णे' इति नक् । निदाघेति । ९९१ दह भस्मीकरणे । घञि । न्यङ्क्वादित्वात्कुत्वम् । मेघमिति । ९९२ मिह सेचने । अचि प्राग्वत् कु । स्कन्धादयोऽनुदात्ता उदात्तेत ॥

भगवतोऽक्रूरानुग्रहमाह—

मोहं चिकित्सन्वचसास्य कृष्णो दीदांसुचित्तस्य सुविस्मितस्य ।
जगाम शीशांसितशस्त्रहस्तैर्गोपैः सहासौ परिपक्वपुण्यैः ॥ ४१ ॥

असौ कृष्णो वचसास्य मोहं चिकित्सन्नपनयन् गोपै सह जगाम । दीदांसुचित्तस्य दीदांसु ऋजूभवनशीलं चित्तं यस्य तस्य । शीशांसितशस्त्रहस्तै । शीशांसितं तीक्ष्णीकृत शस्त्रं हस्ते येषा तै ॥—चिकित्सन्निति । ९९३ कित निवासे रोगापनयने च । अयमुदात्तेत् । सन्नन्त । उदात्तेत्त्वात् सन्नन्तस्य परस्मैपदमेव । अत्र निवासार्थो व्यर्थ. । रोगापनयने हि सन्नुच्यते । संशयनिग्रहापनयननाशनादयश्चास्यार्था । अस्मात् 'गुप्तिज्किद्भ्य,' इति सनि शता । दीदांसु इति । ९९४ दान अवखण्डने । ९९५ शान तेजने । इमावपि नित्यसन्नन्तौ स्वरितेतौ । दानेरार्जवे सन्नुक्ते अवखण्डनोक्त्यर्थो । दाने 'मान्वध–' इति सनि उ । शीशांसितेति । शाने निशातने प्राग्वत्सनि कर्मणि क्त । परिपक्वेति । ९९६ डु पचष् पाके । कर्तरि क्त । 'पचो व ' इति निष्ठावत्वम् ॥

१ 'ञिष्विदा' इति धातुपाठे. २. 'न्यङ्क्वादित्वात्' इत्यादर्शे ३. 'खण्डने' इति धातुपाठे.

अत एवानुक्तसिद्धामपि सर्वमनस्तुष्टिं स्पष्टयति—विश्वेषां सर्वेषां मुदं दुहान: पूरयन्। तद्रूपममृतं क्षारयन् वा ॥—अदन्निति । १०११ अद् भक्षणे । 'व्यत्यदन्ति वृका मेषान्' इत्यादौ हिंसार्थोऽपि । अस्माच्छता । मधुघ्न इति । १०१२ हन हिंसागत्यो । 'अमनुष्यकर्तृके च' इति टक् । अनुदात्तावुदात्तेतौ । द्विषते । १०१३ द्विष अप्रीतौ । शता । दुहान । १०१४ दुह प्रपूरणे । प्रपूरणं पात्रादिपूरणार्थं क्षारणम् । तस्मात् शानच् । दिग्ध इति । १०१५ दिह उपचये । उपचयो लेपनम् । कर्मणि क्त । लेह्य इति । १०१६ लिह आस्वादने । ण्यत् । द्विषादयोऽनुदात्ता: स्वरितेत । चक्षीमहि । १०१७ चक्षिङ् व्यक्ताया वाचि । तत्र प्रायेणाङ्पूर्वोऽस्य दर्शनार्थोऽपि निमन्त्रणे लिङ् । उपैर्ते । १०१८ ईर गतौ । कम्पने च द्रुमे । अस्माल्लङ् ॥

पुरावलोकनव्याजेन भक्तानुग्रहार्थं प्रस्थितस्य तस्य प्रवृत्तिमाह—

ईड्योऽयमीशः समुपास्तिशीलैराशासितः पीतपटीं वसानः ।
स्वीयैश्चकंसे कशनीयकासी रमोष्ठनिंसी नतचित्तनिञ्जी ॥ ४५ ॥

अयमीश पीतपटीं वसानस्तदानीं विशेषरम्या परिदधान सन् स्वीयै: चकंसे सचरितवान् । पीतपटीं वसान इत्यनेन मनोहरत्वमुक्तम् । कीदृश । ईड्य: स्तुत्य । समुपास्तिशीलैराशासित: । समीचीनामुपास्तिं ध्यान शीलयन्ति अभ्यस्यन्ति ये तैराशासित इष्टः । कशनीयान् शासनीयान् कसितुं शासितुं शील यस्य स । रमाया ओष्ठं निंसितुं चुम्बितु शीलं यस्य स: । नताना चित्तं निञ्जयितुं शोधयितुं शीलं यस्य स ॥—ईड्य इति । १०१९ ईड स्तुतौ । ण्यत् । ईश इति । १०२० ईश ऐश्वर्ये । पचाद्यचि ईश । समुपास्तीति । १०२१ आस उपवेशने । उपपूर्वत्वात् सेवार्थत्वम् । क्तिन् । आशासित । १०२२ आङ् शासु इच्छायाम् । उदित्येके । कर्मणि क्त । वसान । १०२३ वस आच्छादने । शानच् । चकंसे । १०२४ कसि गतिशासनयो । कशेत्येके । कसेत्यन्ये । कंसेर्लिट् । कशनीयकासी । कशेरनीयर् । कसेर्णिनि । रमोष्ठनिंसी । १०२५ णिसि चुम्बने । णिनि । चित्तनिञ्जी । १०२६ णिजि शुद्धौ । अस्माण्ण्यन्ताण्णिनि ॥

भगवद्दर्शनेन पौराणा स्वस्ववासनानुरूपं विकार वक्तुमाह—

शिञ्जानपिञ्जानसुवर्णभूषासंपृञ्जितो वृज्यविवृञ्जिसेव्यः ।
पृक्ताग्रजः पृञ्जितगोपसूनुर्दृष्टोऽब्धिशायी स जनैर्युवद्भिः ॥ ४६ ॥

अब्धिशायी स पृक्ताग्रजः सयुक्ताग्रज पृञ्जितगोपसूनु सयुक्तगोपबालश्च सन् युवद्भि: कौतुकातिशयात् तत्र मिश्रीभवद्भिर्जनैर्दृष्ट । आसीदिति शेष । कीदृगित्याह—शिञ्जानाभिरव्यक्तशब्द कुर्वाणाभि पिञ्जानाभिर्वर्णाधिक्येन पिञ्जलीभवित्रीभि सुवर्णभूषाभि: सपृञ्जित पिञ्जलीभूतो वृज्यविवृञ्जिसेव्य: वर्जनीयवर्जनशीलै सद्भि सेव्य ॥—शिञ्जानपिञ्जानेति । १०२७ शिजि अव्यक्ते शब्दे । १०२८ पिजि वर्णे । पिञ्जलत्वं तत् ।

१. 'मद्रूप' इति पाठः. २. 'आङ. शस इच्छायाम्' इति पाठ..

संपर्चन इत्येके । अमयन इत्यन्ये । अम्पर्के पान्न इत्यपरे । पृचि इत्यप्येके शिविपिम्पोः धा मत् । पृचे कर्तरि क्तः । पृम्यमिपृचीति । १०२९ पृजी वर्जने । इविमिति केचित् । तस्मात् क्यप् । इदित्त्वपक्षे मिनि पृचेति । पृचिरेति । १०३० पृची संपर्चने । इदि दिति केचित् । पृचो कर्मणि क्तः । ईरादय उदात्ता अनुदात्तेतः । सुत्र । १०३१ पूङ् प्राणिगर्भविमोचने । 'पूङ क्त्व' इती पुः । भविष्यदायी । १०३२ दीङ् क्षये । उदात्ता वात्मनेभाषौ । दीङो मिनिः । पुवन्तिः । १०३३ पु मिश्रणे । अमिश्रणेऽप्येके । धाता ॥

अथ अन्तमप्रकामवस्थामाह—

केऽप्यत्र राम नुनुवुः सकेषु सुरस्तुतात्मानमसुं सुवाक्याः ।

सोऽनूपुंवोऽप्यौवनसुस्तुवत्या काम्येव कामं स्तुवतां सुवाप ॥४७॥

केऽप्यमेवमास्या असु सुवाक्या सुतो भक्तिलिङ्गत्वयत्या सुतो वाक्यप्रवाहो येषां तादृशाः । अत एव यत्नेनास्मो रामो नमितवा पुपुवुस्तदृशः । कीर्तयम् । सकेषु सुर्व नेषु सुरवत् स्तुतयेत्यिवशीस्य आत्मा मनो यस्य तम् । अमवतो सकेषु कृपावि षयमाह—सोऽनूपुंवोऽप्यौवनस्य एवात्मानं प्रकाशयन् । कुत्सा कन्त्या काम्या स्तुवतो कामभिष्टं पुष्माकं मवसिवि सुवाप इत्याचीत् तेपामभिमुखमपच्छन् । अमान् तत्तत्कर्मसु सौति प्रेरयतीति अनसुव । ईश्वर इति वा ॥—रातैवि । १०३४ क शब्दे । 'स्मस्सुटो बहुलम्' इति बाहुलकाद् अन् । तुनुवुः । १०३५ शु स्तुती । क्विद् । सुरेति १०३६ दुस्तु शब्दे । 'कत्रेम्र—' इत्यादिना रमि निपातितः । सौति यपनकाले कृदिति काम सौति सुरः । स्तुवेति । १०३७ स्तु तेमने । कर्मणि क्तः । सुवेति । १०३८ ष्णु प्रस्रवणे । कर्तरि क्तः । यौआदय उदात्ताः परस्मैभाषा । अनुर्णुव इति । १०३९ ऊर्णुञ् आच्छादने । उदात्त उभयतोभाषाः । कर्तरि क्तः । 'वाच्य ऊर्णोर्णुवद्भावः' इति णुवत्वेवक्य प्रत्ययनिरूपणम् । अर्थात् । १०४० शु अभिगमने । अङ् । 'उवो धातु—' इति इमितः । अमसुत् । १०४१ षु प्रसवैश्वर्ययो । प्रसवोऽनुज्ञा । ध्या पीता अपवापि सौति महतीमो- स्तुत्ववु'जास्तिकम्' । इति प्रयोगमुदाहरणमपि प्रसव । तस्मात् क्विप् । सुवता । १०४२ कु शब्दे । मवरि ङीप् । अनुदात्ता परस्मैभाषा । स्तुवताम् । १०४३ ष्टुञ् स्तुतौ । धाता । सुवाप । १०४४ यूञ् अपवार्यां वाचि । धातुम् । अनुदात्ता उभयतोभाषौ ॥

पुरान्तर्भागे गतस्य महामार्गप्राप्त्या सर्वसुकृतिजनानुभवमाह—

इत्थं स्वधीतोपनिषद्भिरेषामधीत्यरूप स वियत्क्रमेण ।

इयत्स्व राजपथं समायाद्यावाक्स्तोऽस्मात्पताकमीदः ॥ ४८ ॥

स ईशो वियम् संचरन् क्रमेण राजपथं समायात् प्राप । कीदृशः । स्वधीतोपनिष द्भिर्वेदान्तपारगैरिवाः प्राप्तुं शक्यः । एषां ज्ञानिनामधीर्वं सारणीयं रूपं यस्य सः । कीदृशं राजपथम् । इयत्तमियम्त ईतवतो गच्छन्तो जना यस्मिंस्तम् । तथा वातेन आकुम्

१ 'ततवातः' इति पाठः

उद्धाता- पताका यस्मिंस्तम् ॥—इत्य इति । १०४५ इण् गतौ । 'एतिस्तु-' इति क्यप् । स्वधीतेति । १०४६ इङ् अध्ययने । कर्मणि क्त । अधीत्येति । १०४७ इक् स्मरणे । 'इण्वदिक इति वाच्यम्' इति क्यप् । वियन् १०४८ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । जन्मोपक्रमत्वात् गर्भग्रहण प्रजन- । शता । इयदिति । वी ई इति प्रश्लेषादीधातोः शता । सामायात् । १०४९ या प्रापणे । इह प्रापणं गति । लङ् वातेति । १०५० वा गतिगन्धनयो- । 'गन्धनं सौरभ्यकरणम्' इति सहस्रनामभाष्ये । 'अर्दनं हिंसन च गन्धनम्' इति लीलाशुक । उद्धातेनि । १०५१ भा दीप्तौ । द्वयो कर्तरि क्त ॥

भगवद्दर्शनोत्सुकाना नारीणामवस्थामाह चतुर्दशभिः—

स्नान्त्यस्तदा श्राणमुपास्य चान्नं निद्रां गता- प्सातिपरास्तथान्याः ।
पान्त्यः शिशून्धान्यधनानि रान्त्यो लान्त्यश्च काश्चित्कुसुमानि दान्त्यः ॥ ४९ ॥
ख्यान्त्यः कथाः प्राणमुदां पतीनां निर्मान्त्य इष्टानि वचून्वचन्त्यः ।
नार्यो विदित्वोपगमं मुरारेरासन्गता राजपथं सुमृष्टम् ॥ ५० ॥

तदा नार्यो मुरारेरुपगमं विदित्वा सुमृष्टं सम्यक्शोधितं राजपथ गता आसन् । स्नान्त्यः स्नान कुर्वत्य । अन्या श्राणं पक्वमन्नमुपास्य भुक्त्वा निद्रा गता- । तथा—प्सातिपरा भोजनपराः । शिशून् पान्त्यो रक्षन्त्य । धान्यधनानि रान्त्य तत्तज्जनेभ्यो यच्छन्त्य । लान्त्य तान्येव तेभ्य आददानाश्च । काश्चित् कुसुमानि दान्त्य लुनत्य । कथा ख्यान्त्य कथयन्त्य । प्राणमुदा पूर्णहर्षाणा पतीनामिष्टानि निर्मान्त्य कुर्वाणा । वचून् प्रियवाक्यानि वचन्त्य भाषमाणाश्च । एवं तत्तत्प्रवृत्तिं कुर्वाणा ॥—स्नान्त्य इति । १०५२ ष्णा शौचे । शतरि ङीप् । 'आच्छीनद्योर्नुम्' इति नुम् । श्राणम् । १०५३ श्रा पाके । पाकोऽत्र विक्लित्ति । कर्तरि क्ते यण्वत्त्वान्नत्वम् । निद्राम् । १०५४ द्रा कुत्सायां गतौ । सा च पलायनस्वापौ । स्वापे निपूर्वे । 'आतश्चोपसर्गे' इत्यङ् । प्साति । १०५५ प्सा भक्षणे । क्तिन् । पान्त्य- । रान्त्य । लान्त्य । दान्त्य । ख्यान्त्य । १०५६ पा रक्षणे । १०५७ रा दाने । १०५८ ला आदाने । द्वावपि दानार्थावित्येके । १०५९ दाप् लवने । १०६० ख्या प्रकथने । क्शा इत्यपि केचित् । एभ्य शतरि ङीप् । प्राणेति । १०६१ प्रा पूरणे । कर्तरि क्ते नत्वम् । निर्मान्त्य । १०६२ मा माने । मानमिहान्तर्भाव । निष्पूर्वत्वादर्थभेद । शतरि ङीप् । वचत्य- । १०६३ वच परिभाषणे । शतरि ङीपि सत्यकाराभावाद् 'आच्छीनद्यो-' इति नुम् न । इणादयोऽनुदात्ता परस्मैभापा । इङ् त्वात्मनेपदी । विदित्वा । १०६४ विद ज्ञाने । क्त्वा । आसन् । १०६५ अस भुवि । लङ् । सुमृष्टम् । १०६६ मृजू शुद्धौ । शोधना सा । कर्मणि क्त ॥

विलम्बहेतोः समरोदन्या विलोक्य सुप्ता इव तस्थुरन्याः ।
उदश्वसन्प्राणमिवाप्य काश्चिद्दृष्ट्वा सलीलं मृदु जक्षतं तम् ॥ ५१ ॥

१- 'गतिप्रजनकान्त्यशनखादनेषु' इति पाठ-.

एवं रागाकुलासु स्त्रीषु भगवतो वृत्तिमाह—

जुहृत्प्रियो भीरुजनं ह्रियार्तं पिप्रत्कृपाभारभृतैरपाङ्गैः ।
अमेयधामा स जहेऽघहानिं ददज्जनेभ्यो मुदमादधानः ॥ ५४ ॥

जुहृत्प्रिय स जहे । जुह्वतामग्निकर्मानुष्ठातॄणा प्रिय स कृष्णो राजमार्ग एव किंचित् सचरितवान् । कीदृश । कृपाभारेण भृतै पूर्णैरपाङ्गैर्भीरुजनं स्त्रीजनं पिप्रत् सकटात् पालयन् ह्रिया लज्जया आर्तं व्याकुलं स्त्रीजनं जनेभ्यो भक्तजनेभ्योऽघहानिं दुरितक्षयं ददत् प्रयच्छन् । मुदमानन्दातिशयमादधानश्च ॥—जुहृदिति । १०८३ हु दानादनयो । प्रीणनेऽपीति भाष्ये । दानमग्न्यादौ प्रक्षेप तन्त्रेण । शतरि 'नाभ्यस्ताच्छतु' इति नुमभाव । भीरु इति । १०८४ ञिभी भये । 'भिय क्रुक्लुकनौ' इति क्रु । ह्रिया । १०८५ ह्री लज्जायाम् । भावे क्विप् । ह्रादयोऽनुदात्ता. परस्मैभाषा । पिप्रत् । १०८६ पॄ पालनपूरणयो. । ह्रस्वान्त इत्येके । उदात्त परस्मैभाषा' । ह्रस्वान्तस्त्वनुदात्तः शता । भारभृतै । १०८७ डुभृञ् धारणपोषणयो । डु भृञ् इति द्रुमे । कर्मणि घञ् । क्तश्च । अनुदात्त उभयतोभाष । अमेयेति । १०८८ माङ् माने शब्दे च । 'अचो यत्' । जहे ।१०८९ ओहाङ् गतौ । लट् । भृञादित्रयं गतम् । अनुदात्तावात्मनेभाषौ । हानिम् । १०९० ओहाक् त्यागे । 'ग्लाम्ला–' इति नि । अनुदात्त परस्मैभाष । ददत् । १०९१ डु दाञ् दाने । शता । आदधान । १०९२ डु धाञ् धारणपोषणयो । दानेऽपीत्येके । शानच् ॥

मथुरा प्राप्तस्य भगवत स्वज्ञातीना यदूना प्रथमसगममाह—

प्रणेनिजद्भिर्मतिमर्थतत्त्वं सुवेविजानैर्यदुभिः स विष्णुः ।
घर्मोष्मभिस्तत्र समारताग्रे नभस्तुरैस्तैः प्रधने प्रवीणैः ॥ ५५ ॥

स विष्णुस्तत्र तस्मिन्देशे तैर्यदुभिरग्रे समारत सगतोऽभूत् । कीदृशैर्यदुभि । मतिं प्रणेनिजद्भि शुद्धा परिपुष्टा च कुर्वाणै । अर्थतत्त्वं पुरुषार्थाना सारासारतत्त्वं सुवेविजानै. सुतरा विभजद्भि. । घर्मोष्मभिर्ग्रीष्मसदृशप्रतापैर्नभस्तुरैर्मेघवद्वेगवद्भि. । प्रधने युद्धे प्रवीणै ॥—प्रणेनिजद्भि । १०९३ णिजिर् शौचपोषणयो' । शता । सुवेविजानैः । १०९४ विजिर् पृथग्भावे । शानच् । विष्णु । १०९५ विष्लृ व्याप्तौ । उदिदित्येके । इरिदिति द्रुमे । 'विषे किच्च' इति नुप्रत्यय । निजादयोऽनुदात्ता स्वरितेत । घर्मेति । १०९६ घृ क्षरणदीप्त्यो । समारतेति[1] । १०९८ ऋ गतौ । सपूर्वात् 'समो गम्यृच्छि–' इति तङ् । अनुदात्ता परस्मैभाषा' । नभ इति । ११०० भस भर्त्सनदीप्त्यो । उदात्त उदात्तेत् । नञ्पूर्वात् क्विप् । तुरैरिति[2] । ११०२ तुर त्वरणे । उदात्त उदात्तेत् । 'इगुपध–'इति क । प्रधनेति[3] । ११०४ धन धान्ये । अन्यमरणार्थादस्माद्धनर्थे क । अयमप्युदात्त उदात्तेत् । वृत् । जुहोत्यादयो वृत्ता । श्लुविकरण समाप्तम् ॥

१ अत्र '१०९७ हृ प्रसह्यकरणे' १०९९ 'सृ गतौ एतौ धातू नोदाहृतौ. २. अत्र '११०१ कि ज्ञाने' नोदाहृत ३ अत्र '११०३ धिष शब्दे ११०५ जन जनने ११०६ गा स्तुतौ' एतेऽपि नोदाहृता'.

अथ रजकवधप्रसङ्गमाह—

दीव्यन्देवो विचित्रस्युषमथ रजकं प्रैक्षताक्नूतमग्रे
दीव्यन्तं तत्रतत्र क्षुसितफलगणान्क्नोप्युप प्योसहीनम् ।
तं क्षुम्यद्दृष्टिनृत्यत्तुपमपि च गवत्रासमुत्कुप्यपत्तं
पोष्य प्रोथे खरेण स्वजनविगुधितं क्षिप्यता पुष्पमाप्वीम् ॥५६॥

अथ दीव्यन् चञ्चन् देवः क्रीडादि कुर्वन् हरिरग्रे आस्यूतमागतं रजकं प्रैक्षत । कीदृग्देव । क्नोप्युप कुटिलीभवन्तो स्युषः दाहकः । कीदृशं रजकम् । विचित्र स्युषम् । नानावर्णं सुषिचनी कुर्वन्तम् । क्षुसितान् मक्षितान् फलगणान् प्योसहीनं विमायमुक्तं यथा तथा तत्र तत्र दीव्यन्तं क्षेपणं कुर्वन्तम् । प्योसहीनमिति रजकविशेषणं वा । अपि च पुष्पमाप्वीं क्षिप्यता निरस्यता खरेण तं प्रोथे । कीदृशं तम् । क्षुम्यन्ती व्याकुलां दृष्टी नृत्यन्ती सद् यस्य तम् । उत्कुप्यत् पूतीमवदङ्गं यस्य तम् । पोष्यं हिंसनीयम् । स्वजनेन विगुधितं परिवृतम् ॥—दीव्यन्निति । ११०७ विवु क्रीडा विजि[1] गीषाव्यवहारद्युतिस्तुति । दिवु । व्यवहार उचितक्रियादिय । मिति (दिवि) रैनर्थापे इति देवतान्ताविसूत्रे प्राह एदः । अस्मात् शतर्यें श्यना । देव इति क्रीडायां पचाद्यच् । विचित्रस्युषम् । ११०८ षिवु तन्तुसंताने । क्विपि ऊठ् । आस्यूतम् । ११०९ ष्ठिवु गतिशोषणयो । कदित्येके अपरस्परशिष्य— स्यूट् । ष्ठीव्यन्तम् । १११० ष्णुसु निरसने । आसाभि घरणं तत् । श्यना । क्षुसितेति । ११११ ष्णुसु अदने । कर्मणि क्तः । १११२ ष्णसु निरसने इति केचित् । क इति । १११३ क्नसु ह्वरणदीप्त्योः । क्विप् । क्नुप । १११४ व्युष दाहे । व्युषच— इति कः । प्योषेति । प्युस विभाग इत्येके । घञ् । क्षुम्यन्निति । १११५ प्लुष च । दाहे इति शेषः । श्यना । नृत्यन्निति । १११६ नृती गात्रविक्षेपे । श्यना । त्रासेति । १११७ त्रसी उद्वेगे । घञ् । उत्कुप्यन्निति । १११८ कुथ पूतीभावे । दुर्गन्धीभावस्तद्(?) । श्यना । पोष्यम् । १११९ पुथ हिंसायाम् । ण्यत् । विगुधितम् । ११२० गुध परिवेष्टने । कर्मणि क्तः । क्षिप्यता । ११२१ क्षिप प्रेरणे । तत्र निरसनम् । श्यना । पुष्पेति । ११२२ पुष्प विकसने । घञर्थे कः ॥

तिम्यन्मते स्तिम्यति नाम मन्मन स्तीम्यस्तु वार्ड्डीसम्युते वदाम्यहम् ।
देहि प्रभो प्रेष्य सुसोहनाय मे जीर्णांशुकाय त्वमहीर्जमंशुकम् ॥ ५७ ॥

हे तिम्यन्मते आर्द्रीभवद्बुद्धे रजक मन्मनः स्तीम्यस्तु आर्द्रीभवत्तु स्तिम्यति आर्द्रीभवति नाम । तद् वस्मादहं मीर्लं सम्यग्भूते वदामि । हे प्रभो प्रेष्य ( सुसोहनाय मे ) जीर्णांशुकाय जिमाम्बराय मे मह्यं सुसोहनाय सम्यक्तृप्त्यर्थमजीर्णं नवमंशुकं देहि । जीर्णांशुः क्षीणशोभः अयो यस्य तस्य संबुद्धिः ॥—तिम्यन्निति । ११२३ तिम ११२४

1 'ष्ठिवि भोजनपराभवयाच्ञाग्निनिरवद्यु' इति धातुपाठस्थपाठः.

ष्टिम ११२५ ष्टीम आर्द्रीभावे । तीम इत्यप्येके । तिमे शता । स्तिम्यति । ष्टिमेर्लट् । स्तीम्यत्तु । [1]सविसाम्यात् तीम्यत्स्विति ना छेद । ष्टीमितीम्यो शता । व्रीलम् । ११२६ व्रीड चोदने । [2]चोदन लज्जा । प्रेरणे च द्रुमे । घञ् । प्रेप्य । ११२७ इष गतौ । ण्यत् । [3]सुसोहनाय । ११२९ पुह चक्यर्थे । स च तृप्ति· ल्युट् । सहेलप्येके । जीर्णे इति । झीर्ण इति । ११३० जृष् ११३१ झृष् वयोहानौ । द्वयो कर्तरि क्त । दिवादय उदाता उदात्तेत क्षिपिवर्जम् ॥

रजकवाक्यमाह—

> किं सूयसे गिरमदून नितान्तदीना-
>
> मुड्डीनकाकसम भूपतिधीनमेतत् ।
>
> मीयस्व रीणनय मा क्षितिपालयेऽस्मि-
>
> न्व्रीयस्व धार्ष्ट्यमिति दुर्मतिरीशमूचे ॥ ५८ ॥

हे अदून अपीडित, उड्डीनकाकसम, त्वं नितान्तदीना गिर सूयसे उत्पादयसि । एतत् त्वया याच्यमानमशुक भूपतिधीन भूपाधार तदायत्तम् । हे रीणनय गतविनय । अस्मिन् क्षितिपालये राजगृहे मा मीयस्व मृतो भव । धार्ष्ट्यं व्रीयस्व च्छादय । दुर्मतिरिति ईशमूचे ॥—सूयसे इति । ११३२ षूङ् प्राणिप्रसवे । प्राणिग्रहणमतन्त्रम । अयमनूयार्थोऽपि । अस्माल्लट् । अदून । ११३३ दूङ् परितापे । स्वादय ओदित इति ओदित्त्वान्निष्ठानत्वम् । दीनाम् । ११३४ दीङ् क्षये । उड्डीनेति । ११३५ डीङ् विहायसा गतौ । गतिमात्रे च । धीनम् । ११३६ धीङ् आधारे । एषु कर्तरि क्त । मीयस्व । ११३७ मीङ् हिंसायाम् । हिंसात्र मृति लोट् रीणेति । ११३८ रीङ् स्रवणे । प्राग्वत् क्त । आलये ११३९ लीङ् श्लेषणे । 'एरच्' । व्रीयस्व । ११४० व्रीङ् । वृणोत्यर्थे । छादन परिग्रहो वा तत् । लोट । स्वादय ओदित ॥

> आपीय तद्गिरममाननिरीतरोप·
>
> श्रीतिं श्यतोऽस्य स करेण शिरोधिमच्छात् ।
>
> धर्मावसायजनद: खलु योऽजनिष्ट
>
> दीप्तोष्मपूर्णभुजतूर्णविघूर्णवैरी ॥ ५९ ॥

स तद्गिरममापीय श्रुत्वा अमाननिरीतरोपोऽमानमनवधि यथा तथा निरीतो निर्गतो रोपो यस्य तादृश सन् स्वस्य श्रीतिं श्यतस्तनूकुर्वतो वासोदानाभावेन नाशयतोऽस्य रजकस्य शिरोधिं करेणाच्छात् चिच्छेद । य खलु धर्मावसायजनदो धर्मनाशकजनानामवखण्डिता सन् अजनिष्ट । दीप्तोष्मपूर्णेन भुजेन तूर्णं यथा तथा विघूर्णा हिंसिता वैरिणो येन स ॥—

१ 'खर्परे शरि वा विसर्गलोपो वक्तव्य ' इति विसर्गलोपे 'मन स्तीम्य' इति च्छेद . पक्षान्तरे 'मन तीम्य' इति वोध्यम्, २ 'चोदने लज्जाया च' इति धातुपाठ . ३. अत्र ११२८ षह चक्यर्थे नोपयुक्त..

रवद्ध बहु अनल्पमंशुकं विसृज्य त्यक्त्वा इमं शप्यन्तो निन्दन्त. प्रदुद्रुवु. । शुच्यदङ्गका. स्वेदादिभि पूतीभवत्कुत्सिताङ्गा. । रक्त कुसुम्भादिभि. कृतनानावर्णम् । कृष्णो वसनान्यंशुकानि प्रपेदे उद्धृतवान् ॥—मृष्यमाणा इति । ११६४ मृष तितिक्षायाम् । शानच् । शुच्यादिति । ११६५ ई शुचिर्[1] पूतीभावे । दुर्गन्धीभावस्तत् । शौचविशरणक्लेशेषु च द्रुमे शता । द्वावुदात्तौ । सुनद्धम् । ११६६ णह बन्धने । कर्मणि क्त । रक्तम् ।११६७ रञ्ज रागे। कर्तरि क्त । शप्यन्त. । ११६८ शप आक्रोशे । शता । त्रयोऽनुदात्ता' । मृषादय. पञ्च स्वरितेतः । प्रपेदे । ११६९ पद गतौ । लिट् । खेदेति । ११७० खिद दैन्ये घञ् ॥

प्राग्विद्यमानवसनेष्ववधृतैकभोगो
बुद्ध्वा ददौ च रिपुयोधजयी निजेभ्यः ।
कंसानुरोध्यणनहृन्मतिमद्युगर्च्यः
शेषं व्यसृज्यत पटौघमलिश्यमानम् ॥ ६२ ॥

ईशो विद्यमानवसनेष्वनर्घवस्त्रेष्वेक प्राक् अन्येभ्य. पूर्वमधृत परिहितवान्, बुद्ध्वा निजेभ्यो ददौ च । स्त्रीयाना तारतम्यमवगम्य दत्तवांश्च । शेषं पटौघं व्यसृज्यत त्यक्तवान् कंसानुरोध्यणनहृत् कंसानुवर्तिनामणनहृत् प्राणहृत् । मतिमद्युगर्च्यो मतिमता ज्ञानिना युजा समाधिकर्तृणामर्च्य । अलिश्यमानमनल्पीभवन्तं पटौघम् ॥—विद्यमानेति । ११७१ विद सत्तायाम् । शानच् । बुद्ध्वा । ११७२ बुध अवगमने ज्वलादिगतबोधतिवद्बुद्धोधो ज्ञान चार्थः । तस्मात् क्त्वा । योधेति । ११७३ युध सम्प्रहारे । अच् । कंसानुरोधीति । ११७४ अनो रुध कामे । अनुपूर्वो रुधि कामेऽर्थे तङ्श्यनौ भजते। तस्मादत्र तु णिनि. । अणनेति । ११७५ अण प्राणने । अन इत्येके । ल्युट् । मतीति । ११७६ मन ज्ञाने। क्तिन् । युगिति । ११७७ युज समाधौ । अकर्मकोऽयमिति माधव. । क्विप् । व्यसृज्यत । ११७८ सृज विसर्गे । स चोत्पादनत्यागौ । लङ् । अलिश्यमानम् । ११७९ लिश अल्पीभावे । शानच् । पदादयोऽनुदात्ता अण्यतिवर्जमनुदात्तेत ॥

राध्यद्द्वेषगुणोऽथ वायकवराद्दैत्याविदेपोऽपुष-
च्छोषं तोपकृतोऽस्य दोपविततेराश्लिष्टलक्ष्मीस्तन. ।
शक्यन्गर्वमशक्यमानमनसामास्विद्यदास्योऽक्रुधं
क्षुध्यद्भक्तदमाप मालिकवरं शुद्धं स सिद्धेप्सितम् ॥ ६३ ॥

अथैष दैत्याविद् दैत्यच्छेत्ता वायकवरात् सौचिकश्रेष्ठात् तद्दत्तोष्णीषादिभी राध्यद्द्वेषगुण सिध्यन्मनोज्ञवेष सन् तोषकृतोऽस्य दोषविततेर्नाशमपुषदवर्धयत् । तदनन्तर च स मालिकवर मालाकारश्रेष्ठमाप । कीदृश । अशक्यमानमनसामसहमानमनसा गर्वं शक्यन्

1. 'शुचिर्' अनादिद्द धातुपाठे

काङ्क्षायाम् । ग्लानावेव प्रयोग । मुरारिस्तु 'द्रष्टुं वह्नुताम्यति' इति काङ्क्षायामेवाह । 'शमिलष्टाभ्य.' इति घिनुण् । दमीति । १२०३ दमु उपशमने । अयमकर्मकोऽपि । प्रागवत् घिनुण् । श्रान्तीति । १२०४ श्रमु तपसि खेदे च । क्तिन् । भ्राम्यामि । १२०५ भ्रमु अनवस्थाने । अयमकर्मक सकर्मकश्च लट् । क्षाम्येति । १२०६ क्षमू सहने । अयमषित् । लोट् । क्लान्तम् । १२०७ क्लमु ग्लानौ । कर्तरि क्त । माद्यति । १२०८ मदी हर्षे । हर्षोऽत्र गर्वे । वृत् । शमादयो वृत्ता ॥

अस्तायासविजस्तविश्वतसनो निर्दस्तवासैर्नुतो
वेदव्योषकृदप्लुषो विसितधीकुस्यज्जनांहोवुसम् ।
मुस्तामोष्यसमः किटिस्त्वमसमो लुठ्यन्खलानोकसो
भृश्यभ्रंशनवर्शकाकृशदयस्तृष्णाहरो हृष्य मे ॥ ६६ ॥

त्वं विसितधीकुस्यज्जनाहोवुसमप्लुष । विसितया प्रेरितया धिया कुस्यता सश्लिष्यता जनानामहोरूपं वुसमप्लुषो दग्धवानसि । कीदृश । अस्तायास त्यक्तप्रवास यथा तथा विजस्तविश्वतसन मोक्षितलोकक्षय । निर्दस्तवासैर्निर्दस्त उपक्षीणो वास स्तम्भो नम्रताभावो येषा तै । नुत. । वेदव्योषकृद् व्यासरूपेण वेदाना विभागकृत् । अमसोऽपरिमाण परिमाणहीनो वा त्वं मुस्तामोषी मुस्ताखण्डी किटिर्वराहरूपो असम परिणतवानसि । खलान् ओकस स्थानान् लुठ्यन् क्षोभयन् । भृश्यद्भ्रंशनवर्शकाकृशदयो भृश्यतामध पतता स्वभक्ताना भ्रशस्याध पतनस्य वर्शका छादयित्री अकृशा दया यस्य स तादृगस्त्वं मे हृष्य तुष्टो भव ॥—अस्तेति । १२०९ असु क्षेपणे । कर्मणि क्त । आयासेति । १२१० यसु प्रयत्ने । घञ् । विजस्तेति । १२११ जसु मोक्षणे । कर्मणि क्त । तसनेति । १२१२ तसु उपक्षये । ल्युट् । निर्दस्तेति । १२१३ दसु च । कर्मणि क्त । वासेति । १२१४ वसु स्तम्भे । वस्विलेके । वसेर्घञ् । शमादय· शमिदमि (मदि) वर्जमुदित । व्योषेति । १२१५ व्युष विभागे । व्युसेति । चैके । व्युपेर्घञ् । अप्लुष इति । १२१६ प्लुष दाहे । लुङि पुषाद्यङ् । विसितेति । १२१७ विस प्रेरणे । कर्मणि क्त । कुस्यदिति । १२१८ कुस सश्लेषणे । शता । वुसम् । १२१९ वुस उत्सर्गे । इगुपधात् क । मुस्तेति । १२२० मुस खण्डने । 'घ्रातालातमुतपुतचित्तनिमित्तमुस्त–' इत्यादिना भोजेन क्ते निपातित । मोषी । मुष इत्येके । णिनि । अमस । १२२१ मसी परिणामे । परिमाणे इति द्रुमे । असम इति । 'समी परिणामे' इति दन्त्यादिरित्येके । तस्माल्लुङि पुषाद्यङ् । लुठ्यन् । १२२२ लुठ विलोडने । शता । ओकस । १२२३ उच समावाये । 'ओक उच के' इति निपातित । भृशभ्रंशनेति । १२२४ भृशु १२२५ भ्रंशु अध पतने । द्वयो शतृल्युटौ । वर्शकेति । १२२६ वृश वरणे । ण्वुल् । अकृशेति । १२२७ कृश तनूकरणे । 'अनुपसर्गात्फुल्लक्षीवकृश–' इति निपातित ।

१. 'घिराण् इति पाठ . २. 'उपशमे' इति धातुपाठे. ३. 'विलोटने' इति पाठ .

तेन सौरभेण धूता सम्भ्रान्ता भृङ्गा यस्मिंस्तत् तादृशं पात्रं वृण्वती स्वीकुर्वती । कीदृशं हरिम् । कृतारिदलं कृत हिंसितमरिवलं येन तम् ॥—सुन्वदिति । १२४७ षुञ् अभिषवे । अभिषवो निष्पीडनस्नपनसुरासधानस्नानादि । शता सिता । १२४८ षिञ् बन्धने । कर्मणि क्त. । शितेति । १२४९ शिञ् निशाने[1] । प्राग्वत् क्त । उन्मितेति । १२५० डुमिञ् प्रक्षेपणे । प्राग्वत् क्त । निचयेति । १२५१ चिञ् चयने । 'एरच्' । आस्तृतेति । १२५२ स्तृञ् छादने । लक्षणया विक्षेपे । प्राग्वत् क्त । कृतमिति । १२५३ कृञ् हिंसायाम् । प्राग्वत् क्त । वृण्वती । १२५४ वृञ् वरणे । स्वीकारश्छादन वा तत् । शतरि ङीप् । धुवेति । धूतेति । १२५५ धुञ् कम्पने । धूञ्इत्येके । द्वयो. कर्मणि क्त । स्वादय उभयतोभाषा । अनुदात्ता धुञ्वर्जम् ॥

कन्दर्पेण दुता विलेपकुशला सा चान्तिकं हिन्वता
पृष्टा तेन पृता विलेपनमदात्स्पार्याय लोकस्मृते ।
संप्राप्यो निजशक्तिराद्धतपसः साधोः स देवोऽपि ता-
मृज्वीकर्तुमुपानशे सुकृतिनीं प्रस्तिघ्नुवानः खलान् ॥ ६९ ॥

कन्दर्पेण दुता पीडिता सा च विलेपे तत्सपादने कुशला अन्तिकं हिन्वता प्राप्नुवता तेन पृष्ठा पृता प्रीणिता स्पार्याय प्रीणनीयाय लोकस्मृते लोकपालकाय भगवते विलेपनं कलभमदात् । निजशक्तिराद्धतपसो निजशक्त्या स्वस्य सेवाशक्त्या राद्धं सिद्धफलं तपो यस्य तस्य साधो सप्राप्य स देवोऽपि तामृज्वीकर्तुमृजुदेहा कर्तुमुपानशे समीप प्राप । यत.—सा सुकृतिनी । कीदृशो देव. । खलान्प्रस्तिघ्नुवान् आस्कन्दन्नभिभवन् ॥—दुतेति । १२५६ टु दु उपतापे । कर्मणि क्त । हिन्वता । १२५७ हि गतौ वृद्धौ च । शता । पृता । १२५८ पृ प्रीतौ । कर्मणि क्त । स्पार्याय । १२५९ स्पृ प्रीतिपालनयो । ण्यत् । लोकस्मृते । स्मृ इत्येके । क्विप् । सप्राप्यः । १२६० आप्लृ व्याप्तौ । ण्यत् । शक्तीति । १२६१ शक्लृ शक्तौ । क्तिन् । राद्धेति । १२६२ राध १२६३ साध संसिद्धौ । राधे कर्तरि क्त । साधो । 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' इति साधेरुण्प्रत्यय. । द्वादयोऽनुदात्ता. परस्मैभाषा । उपानशे । १२६४ अशू व्याप्तौ सघाते च क्रुमे । 'अश्नोतेश्च' इति नुट् । प्रस्तिघ्नुवान. । १२६५ ष्टिघ आस्कन्दने । शानच् ।

ऋज्वीकर्तुमित्युक्तम् । ऋज्वीकृतिप्रकारमाह—

तामातिक्य पदे पदेन चिबुके चातिघ्नुवन्पाणिना
चक्रे सघ्नुवतां वधे दधृगसावृज्वीं मनोज्ञाकृतिम् ।
किं चादघ्नुवतीमिमां मम गृहानेहीति याच्ञापरा-
मेष्यामीत्यमुचत्समृद्धकरुणः क्षिण्वन्कटाक्षैर्धृतिम् ॥ ७० ॥

1. 'निशातने' इति पाठः

एवं राजमार्गसंचारेण तत्रत्यभक्तानन्दमुक्त्वा गोपुरान्तर्गतानां सुकृतातिशयेन तत्प्राप्तिमाह—

तुदन्कुचरिताञ्शुभे प्रणुदमान इष्टं दिश-
न्प्रभृष्टपललान्क्षिपन्नरिमतिं कृषन्माधवः ।
ऋषन्नजुषत क्रमान्नगरगर्भमुद्वेजय-
न्नलग्नमनसः खलानवशलज्जमानाङ्गनम् ॥ ७२ ॥

माधव क्रमात् तत्र तत्र विलम्बमान ऋषन् गच्छन् नगरगर्भमभ्यन्तरप्राकारान्तर्भागमजुषतासेवताश्रितवान् । तत्रत्यजनं प्रीणितवानिति वा । कीदृश कुर्वन्नित्यत्राह—कुचरितान् रजकादींस्तुदन् । मालाकारादीञ्शुभे प्रणुदमान. प्रेरयन् । तेषामेव इष्टं ददन्(त्) । प्रभृष्ट पक्वं पलल मास यैस्तान् दुष्टान् क्षिपन् प्रेरयन् निरस्यन् । अत एव अरिमतिं कृपन् विलिखन् विदारयन् । अलग्नमनसो दुर्व्यापारेषु अलग्नमलज्जितं मनो येपा तान् खलान् उद्वेजयन् भीपयन् कम्पयन् वा एतानि पट् तत्कालविशेषणानि । कीदृशं नगरगर्भम् । भगवत्प्रेम्णा अवशा व्याकुला लज्जमाना सलज्जा अङ्गना यस्मिंस्तम् ॥—तुदन्निति । १२८१ तुद व्यथने । शता । प्रणुदमान । १२८२ णुद प्रेरणे शानच् । दिशन् । १२८३ दिश अतिसर्जने । दानं तत् । शता । प्रभृष्टेति । १२८४ भ्रस्ज पाके । कर्मणि क्त । कित्वात् सम्प्रसारणम् । 'स्को'–' इति सलोप । क्षिपन् । १२८५ क्षिप प्रेरणे । निरसननिन्दादयोऽपि प्रेरणभेदा एव । कृषन् । १२८६ कृष विलेखने । तदत्र हलकर्म । द्वयो शता । तुदादयोऽनुदात्ता स्वरितेत. । ऋषन् । १२८७ ऋषी गतौ । शता उदात्त उदात्तेत् । अजुषत । १२८८ जुषी प्रीतिसेवनयो । लङ् । उद्वेजयन् । १२८९ ओविजी भयचलनयो । प्रायेणोत्पूर्व । अस्माण्णिचि शता । १२९० ओलजी १२९१ ओलस्जी व्रीडने । लजे कर्तरि क्त । लज्जमानेति । लस्जे शानच् । सस्य जश्त्वम् । 'ओलजी ओलस्जी व्रीलने' इति चान्द्रमतं माधवदूषितम् । जुषादय उदात्ता अनुदात्तेत ॥

नगरगर्भं वर्णयति पञ्चभि —

वृक्णाण्याचरसोञ्छती फलगणानव्युच्छितायां निशि
स्नान्ती नर्च्छेति मिच्छिता सुजनता यस्मिन्हितं जर्जती ।
चर्चन्ती कटु झर्झती बुधजनं दोषं त्वचित्वर्चती
नित्यं भूपतिमुञ्जनोज्झितमना यत्रास्त खल्या सुखम् ॥७३॥

सुजनता सज्जनसमूह । 'ग्रामजन–' इति तल् । 'सामूहिकेषु तदन्तविधिरिष्यते' इति जनान्तादपि । मिच्छिता क्लेशिता यस्मिन् न ऋच्छति प्राप्नोति । कीदृशी सुजनता ।

१. 'व्रीलने' इति पाठ .

कर्तरि क्त । तृम्फाय । तृम्फेर्घञ् । तोपेति । १३०९ तुप १३१० तुम्प १३११ तुफ १३१२ तुम्फ हिंसायाम् । तुपेर्घञ् । अतुम्पकान् । तुम्पेर्ण्वुल् । वितुफती । संतुम्फती । तुफितुम्फ्यो शतरि ङीप् । उद्दृपितेति । १३१३ दृफ १३१४ दृम्फ उत्क्लेशे । आद्योऽपि फान्त इत्येके । दृपे कर्मणि क्त । अदृफिता । दृम्फे कर्मणि क्त । नकारलोप. । ऋफन्ती । १३१५ ऋफ १३१६ ऋम्फ हिंसायाम् । ऋफेः शतरि ङीप् । ऋम्फेति । ऋम्फेर्घञ् । सुगुफितै । १३१७ गुफ १३१८ गुम्फ ग्रन्थे । गुफे कर्मणि क्त. । गुम्फतीति । गुम्फे शतरि ङीप् ॥

पीयूपोभितहेमकुम्भविशुभद्वक्षोजशुम्भत्तमा
दृब्धस्रग्धरचृत्तकैश्यविधितां शोभां जुडन्त्योऽजुनन् ।
नार्यः संमृडदालिकेलिपृडिता यस्मिन्पृणन्त्यः प्रिया-
न्नित्यं तैर्वृणिता मृणालकमनीयाङ्ग्यो वितोणाशयाः ॥ ७५ ॥

यस्मिन्नार्योऽजुनन्समचरन् । कीदृश्य । पीयूपेणोभित पूरितो यो हेमकुम्भस्तद्वद्विशुभद्भ्या शोभमानाभ्या वक्षोजाभ्या शुम्भत्तमा अत्यन्तं शोभमाना· । दृब्धस्रजो ग्रथिताया मालाया धर धारकं चृत्त भङ्ग्यनुरूप वद्ध च यत्कैश्य केशसमूहस्तेन विधिता विहिता शोभा जुडन्त्य प्राप्नुवत्य । समृडदालिकेलिपृडिता समृडन्तीना सुखायमानानामालीना केल्या पृडिता सुखिता. । प्रियान्पृणन्त्य । तैर्नित्यं वृणिता प्रीणिताः । मृणालकमनीयाङ्ग्यो मृणालवत्कोमलमङ्ग यासा ता । वितोणाशया । वितोणो विगतकौटिल्य आशयो यासा ता. । अनेन नगरगर्भस्य सुखकरत्वमुक्तम् ॥—उभितेति । १३१९ उभ १३२० उम्भ पूरणे । उभे कर्मणि क्त । कुम्भेति । केन जलेन उभ्यते इति कुम्भ । कुम्भे कर्मणि घञ् । पृषोदरादित्वादकारलोप । विशुभत् । शुम्भदिति । १३२१ शुभ १३२२ शुम्भ शोभार्थे । हिंसाया च द्वमे । द्वयो शता । दृब्धेति । १३२३ दृभी ग्रन्थे । कर्मणि क्त । चृत्तेति । १३२४ चृती हिंसाग्रन्थनयो । प्राग्वत् क्त । विधिताम् । १३२५ विध विधाने । प्राग्वत् क्त । जुडन्त्य । १३२६ जुड गतौ । जुन इत्येके । जुडे शतरि ङीप् । अजुनन् । जुनेर्लङ् । समृडदिति । १३२७ मृड सुखने । शता । पृडितेति । १३२८ पृड च । कर्मणि क्त । पृणन्त्य । १३२९ पृण प्रीणने । शतरि ङीप् । वृणिता । १३३० वृणेति च भाष्ये । कर्मणि क्तः । मृणालेति । १३३१ मृण हिंसायाम् । 'तमिविडिमृणिकुलिपलिपञ्चिभ्यश्च' इति भोजोक्ते कालन् । तोणेति । १३३२ तुण कौटिल्ये । घञ् ॥

चाणूरादयोऽपि पुरे सुखं स्थिता इत्याह—

ईशस्य पुण्यसुगमस्य वधं मुणन्तो
मल्लाश्च यत्र चुकुणुः शुनका इवोच्चैः ।

विभु विशिनष्टि—चिलितपीतपटेन वेष्टितेन पीताम्बरेण चलन् विलसन् । जगत्तिलका-कृतिर्लोकालङ्कारभूतश्रीदेहः । अविलितोरुकृपामविलिता असंवृता प्रकाशिता उर्वी कृपा यस्या ता दृश परित इलन् प्रेरयन् । एतैर्भक्तानन्दकरत्वमुक्तम् ॥—निमेषेति । १३५२ मिष स्पर्धायाम् । अयमुन्मीलनार्थोऽपि । अस्माद्धत्रू । किलन् । १३५३ किल श्वैत्य-क्रीडनयो [श्वैत्य इत्येके ।] शता । तिलकेति । १३५४ तिल स्नहने । इगुपधात् केति क । अस्मादिवार्थे कन् । चिलितेति । १३५५ चिल वसने । कर्मणि क्तः । चलन् । इलन् । १३५६ चल विलसने । १३५७ इल स्वप्नप्रेरणयो । द्वयो शता । अविलितेति । १३५८ विल सवरणे । कर्मणि क्तः ॥

भक्तमनोनन्दाय अतिक्रूरेऽप्यत्र क्रीडितवानित्याह—

विलशयप्रतिमैर्निलिते पुरे स हि सुहृत्सु हिलन्नचरत्सुखम् ।
शिलितधान्यसिलप्रणतो हरिः प्रमिलतां हृदये लिखिताकृतिः ॥७९॥

स हरि । हि प्रसिद्धौ । विलशयप्रतिमे सर्पसमैर्दुष्टैर्निलिते गहनीभूते पुरे सुहृत्सु अक्रूरादिषु हिलन् स्वाभिप्रायं प्रकाशयन् यथा तथा अचरत् । कीदृश । शिलितधान्य-सिलप्रणत शिलितं कणश आत्त धान्याना सिल क्षेत्रविकीर्णबीज यैस्तै प्रणत. । प्रमिलता स्वस्मिन् सम्यक् सश्लिष्यता हृदये लिखिता तद्वत्स्थिरीभूता आकृति श्रीमूर्ति-र्यस्य स. ॥—विलेति । १३५९ विल भेदने । अस्याकर्मकत्वं स्वाम्याह । अस्मादिगु-पधात् क. । निलिते । १३६० णिल गहने । कर्तरि क्त । हिलन् । १३६१ हिल भावकरणे । अभिप्रायसूचन तत् । शता । शिलितेति । १३६२ शिल १३६३ षिल उञ्छे । शिले कर्मणि क्त । सिलेति । उञ्छ्यत इति सिल । घञर्थे क । प्रमिलताम् । १३६४ मिल श्लेषणे[1] । शता । लिखितेति १३६५ लिख अक्षरविन्यासे । कर्मणि क्त. ।

अथ कंसस्यातिभयेन दृढध्यानसिद्धये धनुर्भञ्जनं कृतमित्याह—

ततोऽतिकुटिलाशयैः प्रपुटितैः कुचज्जीवितै-
र्गुजद्भिरपि सैनिकैः सुगुडितां डिपद्भिर्जनान् ।
सुधाच्छुरितविस्फुटस्मितरुचैव धैर्यं मुट-
न्धनुस्त्रुटनतो मनाक्प्रतुटनाय शालामगात् ॥ ८० ॥

ततो धनुस्त्रुटनतश्चापच्छेदनेन मनाक् प्रतुटनाय कंसस्य कलहं कर्तुं शाला धनु शाला-मगात् प्राप्त । कथमगात् । सुधया छुरिता लिप्ता विस्फुटा विकसिता प्रकाशिता या स्मितरुक् तयैव धैर्यं मुटन् प्रमर्दयन् नाशयन् । कीदृशीं शालाम् । सैनिकैर्भटैर्योद्धृभि. । सुगुडिता सम्यग्रक्षिताम् । कीदृशैर्भटै । अतिकुटिलाशयैर्वक्रचित्तैः । प्रपुटितै सम्यगेकत्र सघातीभूतै । जनान् डिपद्भि. क्षिपद्भिर्निरस्यद्भि । गुजद्भि सदा क्रन्दद्भि. ।

1 'क्षेपणयो.' इति धातुपाठ .

नूत्या किं भयधूतविद्रुतगुवल्लोकं तदा तद्ध्रुव-
त्कोदण्डं कुवमानमैक्षि दलितं भोजेश्वराकूतवत् ॥ ८२ ॥

स क्षौमेण स्फुडितं छादितं स्रजा निचुलितं संवृतं चैवंरूपमप्यत्रोड्यशोभमनाच्छाद-नीयप्रभं धनुर्गेहक्रोडतले गृहस्य संवृतप्रदेशेऽन्तर्भागे दृष्ट्वा मोदे निमग्नः सन् क्षणात् शीघ्रमगुरिष्टोद्धृतवान् । नूत्या किं बहुप्रशंसया किम् । न किंचित् कार्यम् । तदा ध्रुवत् स्थिरीभवत् तत् कोदण्डं भयधूतविद्रुतगुवल्लोकं भयेन धूतो वेपितो विद्रुतो धावितो गु-वत् पुरीषमुत्सृजंश्च लोको जनो यस्मिञ्शब्दे तथा कुवमानं शब्दायमानं भोजेश्वरस्य कंसस्याकूतमभिप्राय इव दलितं खण्डितमैक्षि सर्वैर्दृष्टम् ॥—स्फुडितमिति । १३९१ स्फुड १३९२ चुड १३९३ ब्रुड संवरणे । कुडेत्यप्येके । स्फुडेः कर्मणि क्त । निचुलितम् । चुडेः प्राग्वत् क्त । अत्रोड्येति । ब्रुडेर्ण्यत् । क्रोडेति । ब्रुडेर्घञ् । कुलित । १३९४ कुंड १३९५ रुड निमज्जने इति चैके । कुडेः कर्तरि क्त । व्रश्चादय उदात्ता उदात्तेतः । अगुरिष्ट । १३९६ गुरी उद्यमने । उद्धरणं तत् । अयमुदात्तोऽनुदात्तेत् । लुङ् । नूत्या । १३९७ णू स्तवने । क्तिन् । धूतेति । १३९८ धू विधूनने । क्त । गुवदिति । १३९९ गु पुरीषोत्सर्गे । उवङ् । शता । ध्रुवत् । १४०० ध्रु गतिस्थैर्ययोः । ध्रुव इत्येके । द्वयोः सह शता । अनजन्तस्य सेट्त्वं भेदः । गुध्रू अनुदात्तौ । ध्रुव उदात्त । णूप्रभृतयः परस्मैभाषाः । कुवमानम् । १४०१ कुङ् शब्दे । शानच् । आकूतेति । कू-ङित्येके । क्त । वृत् । कुटादिर्वृत्तः ॥

अनेन धनुर्भङ्गेन कंसस्य महद् भयं जातमित्याह—

व्यापारेऽत्र तदामरानपि रियन्नाशाः पियन्नाधित-
कौर्योत्क्षीणधनुष्प्रसूतनिनदः कंसे व्यकारीद्गरम् ।
येनानादरवान्धृतोऽपि स चलन्पृच्छन्किमित्युत्सृज-
न्धैर्यं मग्नमनाश्च हृद्रुजि चिरं भुग्नाननस्तस्थिवान् ॥ ८३ ॥

तदा अत्रेदृशे व्यापारेऽमरानपि रियन्प्राप्नुवन्नाशा दिशः पियन्व्याप्नुवन्नाधितकौर्यो-त्क्षीणधनुष्प्रसूतनिनदः । आधितकौर्यं सम्यग्धारितकौर्यं, उत्क्षीणं उद्धृतं धनुषा प्रसूतं प्रेरितश्च यो निनदः स कंसे गरं विषं व्यकारीत्क्षिप्तवान् । अत्यन्तपीडामकरोदित्यर्थः । येन सोऽनादरवान्निरस्तबहुमानः सन् धृतोऽवस्थितोऽपि चलन्वेपमानः किमिदमिति पृच्छ-न्धैर्यमुत्सृजंस्त्यजन्हृद्रुजि मग्नमनाश्च चिरं भुग्नाननोऽवनतमुखस्तस्थिवान्स्थितोऽभूत् ॥—व्यापार इति । १४०२ पृङ् व्यायामे । स च प्रवृत्तिमात्रम् । प्रायेण व्याङ्पूर्वोऽयम् । घञ् । अमरान् । १४०३ मृङ् प्राणत्यागे । अच् । कुडादयोऽनुदात्ता आत्मनेभाषाः । कुङ्वर्जम् । रियन् । पियन् । १४०४ रि १४०५ पि गतौ । द्वयोः शता । आधितेति । १४०६ धि धारणे । गताविति द्रुमे । कर्मणि क्त । उत्क्षीणेति । १४०७ क्षि निवास-

१ 'कुड मृड निमज्जने' इति धातुपाठे २. 'उद्यमे' इति पाठः.

भुक्त्वा गोरससिक्तमन्नमजितः कंसस्य कृन्तन्मुदं
तं खेत्स्यन्पिशिताशदारुणमसौ मोदेन निन्ये निशाम् ॥८४॥

असावजितो मित्रैः समिलमानो नगरोद्यानमेत्य भयलोपिवाग्भिर्भयनिरासकैर्वचनैर्गोपाना भयं विमुञ्चंस्त्यजन् अवलावित्तं कुब्जाया लब्धमनुलेपं वहन् धारयंश्च गोरससिक्तमन्न भुक्त्वा कंसस्य मुदं कृन्तंश्छिन्दन् निरस्यन् तं कस खेत्स्यन् निहनिष्यन् । हेतौ शता । मोदेन निशा निन्ये ॥—समिलमान इति । १४२९ मिल सगमे । उदात्तस्वरितेत् । शानच् । विमुञ्चन् । [ १४३० मुच्लृ मोक्षणे । ] इत पर मुचादित्वान्नुम् । शता । भयलोपीति । १४३१ लुप्लृ छेदने । णिनि. । वित्तेति । १४३२ विदॢ लाभे । कर्मणि क्त । अनुलेपम् । १४३३ लिप उपदेहे । अस्य दहनार्थत्वमप्याह शकराचार्य । अस्माद्घञ् । सिक्तम् । १४३४ षिच क्षरणे । तच्चेहार्द्रीभवनम् । कर्मणि क्त । मुचादयोऽनुदात्ता स्वरितेत । विन्दि सेडिति[2] केचित् कृन्तन् । १४३५ कृती छेदने । उदात्त उदात्तेत् । छता । खेत्स्यन् । १४३६ खिद परिघाते । अनुदात्त उदात्तेत् । लृडन्ताच्छता । पिशितेति । १४३७ पिश अवयवे । अय दीपनायामपि । उदात्त उदात्तेत् । भक्षणार्थमवयवश. क्रियते इत्यर्थे 'पिशिपृषिभ्या कित्' इति भोजोक्तेरितच् । वृत् । तुदादयो मुचादयश्च वृत्ता. । शविकरणं समाप्तम् ॥

इति सव्याख्याने धातुकाव्ये द्वितीय सर्गः ।

## तृतीय सर्ग. ।

अथानन्तामारहरणोद्यतस्यानन्तस्य भगवत श्रीकृष्णस्य तृतीयदिवसव्रतं सप्रपञ्चं वर्णयिष्यन् प्रथमतो रङ्गप्रवेशं वक्तुं पीठिका प्रतिष्ठापयति—

रुन्धन्दिशो दिनमुखेऽथ जगन्ति भिन्द-
न्प्रच्छिन्नसंशयमतिर्मुदमाशु रिञ्चन् ।
भेरीरवश्चतुरघातविविक्तताल-
श्चुक्षोद कर्णमुदयुङ्क्त च मल्ललोकः ॥ १ ॥

अथ दिनमुखे भेरीरव. कर्णं चुक्षोद श्रोत्रपुट चूर्णीचकार । कीदृशो भेरीरव । दिशो रुन्धन् पूरयन् । जगन्ति लोकान् भिन्दन् विभिद्य वहिर्गच्छन् । प्रच्छिन्नसशय। कंसव्यवसायबोधिनी मतिर्येन(?)स । अत एव सर्वेषा मुदं रिञ्चन् त्यजन्[1] चतुरेण विदग्धेन घातेनाभिहननेन विविक्ता स्पष्टीकृतास्ताला यस्मिन् स । मल्ललोक उदयुङ्क्त चोद्युक्तोऽभूच्च॥—रुन्धन्निति । १४३८ रुधिर् आवरणे । भिन्दन् । १४३९ भिदिर् विदारणे । द्वयो. शता । प्रच्छिन्नेति । १४४० छिदिर् द्वैधीकरणे । कर्मणि क्त । रिञ्चन् । १४४१ रि-

१. 'त्याजयन्' इति भवेत् २ 'सेडिसि' इति पाठ .

ष्विद् विरेचने । सता । पिपिषेति । १४४२ पिषिद् पूपगमाने । कर्मणि क्तः । शुक्षोद । १४४३ क्षुविद् संपेषणे । सिद् । उपक्षुद । १४४४ युजिर् योगे । क्तः । अपाचे र्प्यधन्तावप्युपधाॅगोतोऽमयते इति यत्नेन । उभायपोऽनुदात्ता [ स्वरितेता उभयतो भाषाः ] ॥

सन्धुक्ष्णगात्रमथ क्षात्रमवर्तिनस्ते
चाणूरमुष्टिकमुखा वसनान्यकृन्तन् ।
इन्धानसेदमुदविन्त विक्षिप्तलोकः
पेस्पस्तु माधवमभक्ष्मुखेषु तेषु ॥ २ ॥

अथ ते चाणूरमुष्टिकमुखाः संधुक्ष्णगात्रं सम्यक् दीप्तं गात्रं यस्मिन् तथा वसनानि मालमुखोचितानि अकृन्तन्नच्छिन्दन् । क्षात्रवर्त्मा शत्रूणां वधम् हिंसनमनादरो वा शीलं येषां ते मल्लाः । विक्षिप्तलोकाः उत्सवगस्त्वेषु माधवं पेस्यस्तु संचूर्णैर्व्याप्तः । हेतौ यथा । इन्धानवेदं बर्धमानं युद्धं यस्मिन् तथा । उदविन्त उच्चैर्विचारमकरोत् । अभक्षमुखेषु भक्षरहितः शक्तिरहितौ मुखो येषां तेषु ॥—सन्धुक्ष्णेति । १४४५ उत्क्षुविर् दीप्तिवे वनयोः । देवव कौशाम्बिकीयापि । ष्वीतिषमनयोरित्येके । अस्मिन् कर्तरि क्तः । क्षात्रवर्तिन । १४४६ उतृविर् हिंसानादरयोः । णिनि । धातुपाठे । उभायचाः स्वरितेत इत्यब । अकृन्तन् । १४४७ कृती वेष्टने । उपात्त उत्पातेत् । लङ् । इन्धानेति । १४४८ ञि इन्धी दीप्तौ । दीपनायामपि । अनुदात्तोऽनुदात्तेत् । अकर्मकत्वात् । बेदम् । १४४९ खिद् दैन्ये । शम् । उदविन्त । १४५० विद् विचारणे । लङ् । अनुदात्तावनुदात्तेतौ । वि क्षिप्तेति । १४५१ शिपृल् विशेषणे । सकर्मकत्वात् । अकर्मकत्वात् कर्तरि क्तः । पे स्पस्तु । १४५२ पिषृल् सञ्चूर्णने । क्तः हेतौ यथा । अभक्षेति । १४५३ भञ्जो आमर्दने । घञ् । मुखेति । १४५४ भुज पालनाभ्यवहारयोः । अनुमतेऽपि । भुजन्यु व्जौ पाण्युपतापयोः इति निपातितः । शिपादयोऽनुदात्ता [ उदात्तेतः ] ॥

को नस्तृणेढि हिनसाम समुत्तमास्ते
सं गोपसूनुमिति तैलकवाक्यमात्रा ।
सतर्कनग्नवसना परिवेगवृष्ट्या
रङ्गं समेत्य पपृचुः सकलांश्च मल्लाः ॥ ३ ॥

को नोऽस्मांस्तृणेढि हिनस्ति । न कोऽपि तं गोपसूनुमास्ते दर्पितः समुत्तं सिषार्थं कृत्वा वयं हिनसाम मारयाम । मल्ला इति एवमुक्त्वा तं क्षमेत्य सकलान् पपृचुर्योजित वन्तः । भिन्नता मल्लाः । सेतर्कं संकोचितं यथा तथा नग्नं वर्गं वसनं येषां ते । परिवेगेन म वेन कम्पेन वा दृष्टा दीप्ताः ॥—तृणेढीति । १४५५ तृह १४५६ हिसि हिंसायाम् ।

तृहेलट् । हिनसाम । हिंसेलोट् । समुत्तम् । १४५७ उन्दी क्लेदने । कर्मणि क्तः । 'नुद-विदोन्द–' इति नत्वाभावे रूपम् । अक्तेति । १४५८ अन्जू व्यक्तिम्रक्षणकान्तिगतिषु । व्यक्ति प्रकाशनम् । म्रक्षण मिश्रीकरणम् । अस्मात्कर्मणि क्त. । सतक्तेति । १४५९ तन्चू सकोचने । तन्जू इत्येके । द्वयोस्तन्त्रेण कर्मणि क्त । परिवेगेति । १४६० ओविजी भयचलनयो । घञ् । वृक्ता । १४६१ वृजी वर्जने । वृतौ च द्रुमे । 'रृची वरणे' इति केचित् । कर्मणि क्त । पपृचु । १४६२ पृची सपर्के । सकर्मकोऽयं भट्टिनोक्त । तस्माल्लिट् । तृहादय उदात्ता उदात्तेतः । धृत रुधादयो वृत्ता. । इति श्नम्विकरणम् ॥

तन्वन्स मञ्चभुवि सातरसः स्वबन्धू-
नक्षण्वतां क्षितिकरो मुदमर्णवानः ।
कंसस्तृणीकृतरिपुर्घृणिमान्वतार्प्तिं
मन्वान एकमथ मञ्चमलंचकार ॥ ४ ॥

अथ स कंस स्वबन्धून् मञ्चभुवि तन्वन् विस्तारेण निवेशयन् तत्तत्स्थानेषु कुर्वन् वा । वतार्प्तिं प्रार्थितप्राप्तिं मन्वान एकं मञ्चमलचकार अलंकृतवान् । सातरसो दत्त-रस । बन्धूनामित्यर्थात् । अक्षण्वतामहिंसकाना क्षितिकर हिंसनकृत् । मुदमर्णवानः प्राप्नुवन् । घृणिमाञ्शोभावान् ॥—तन्वन् । १४६३ तनु विस्तारे । अयं कृञर्थेऽपि । अस्माच्छता । सातेति । १४६४ षणु दाने । कर्मणि क्ते । 'जनसन–' इति आत्वम् । अक्षण्वताम् । १४६५ क्षणु हिंसायाम् । १४६६ क्षिणु च । क्षणे. शता । क्षितीति । क्षिणे क्तिन् । 'अनुदात्तोपदेश–' इति नलोप । अर्णवान । १४६७ ऋणु गतौ । शानच् । तृणीकृतेति । १४६८ तृणु अदने । घञर्थे क. । तृणम् । तस्मात् अभूततद्भावे इति च्वि. । घृणीति । १४६९ घृणु सदीपने । घण इत्येके । 'इकृषादिभ्य' इति घृणेरिक् । तनादय उदात्ता स्वरितेत । वतेति । १४७० वनु याचने । वने. कर्मणि क्त । मन्वान. । १४७१ मनु अवबोधने । शानच् । उदात्तावनुदात्तेतौ । वनु परस्मैपदीति चान्द्रा अलचकार । १४७२ डु कृञ् करणे । अनुदात्त उभय-तोभाप । अस्माल्लिट् । उविकरण समासम् ॥

अथ भगवतो रङ्गप्रवेशमाह—

क्रीणन्गुणैर्जनमति प्रियरूप ईशो
मासश्रियां प्रमयकृत्सितपीतचेलः ।

१. 'अनृतकृता इत्येके । तेन ऌनत्तीति सिद्धम्' इति क्वचिदधिकः पाठ.. २. 'दीप्तौ' इति धातुपाठे.

मोदस्फुलोऽथ कबरी प्रयुनन्सराम
क्नूनन्मुदक्षमिह रक्षसमगादरिक्षुः ॥ ५ ॥

अथेदः कबरी प्रयुनन् बध्नन् सरामो रामेण सहित इह अस्मिन् काले रक्षसमगात् । कीदृशः । मुणीजनमतिं कीपन् विनिमयन् वशीकुर्वन् मांसप्रियां मांसपायकानां तत्र स्त्रियां प्रमयकृत् हिंसकृत् सितपीतचेलो वस्त्रपीताम्बरो मोदे स्फुटः आप्लुतः । अरिक्षुः शत्रुहिंसकः । क्नूनन्मुदक्षम् । क्नूनन् शब्दायमानो मुदक्षो यस्मिंस्तं रक्षम् ॥—क्रीण-मिति । १४७३ डु क्रीञ् द्रव्यविनिमये । शता । प्रियेति । १४७४ प्रीञ् तर्पणे कान्तौ च । कान्तिः कामना । 'इगुपधज्ञाप्रीकिरः कः' इति कः । मांसप्रियाम् । १४७५ मीञ् पाके । क्विप् । प्रमयेति । १४७६ मीङ् हिंसायाम् । एरच् । सितेति । १४७७ षिञ् बन्धने । कर्मणि क्तः । स्फुटेति । १४७८ स्फुञ् आप्रवणे । आप्रवणं तत् । आवरणं इत्येके । उदुत्तामिति कृते । अस्मात्कर्तरि क्तः । युनन् । १४७९ युञ् बन्धने । शता । क्नाभ्योऽदुपाता उभयतोभाषाः । क्नूनमिति । १४८० क्नूञ् शब्दे । शता । अरिक्षुः । १४८१ द्रूञ् हिंसायाम् । इत्यप्येके । क्विप् ॥

द्वार पुनन्पदतलेन स लूनवैरी
स्तीर्णानन मदजलेन करीतुकामम् ।
नाग ववर्ष पटधूणमुखं धुनानं
कर्णौ श्रृणन्तमभिशिञ्जानमिपूर्वरोपम् ॥ ६ ॥

स श्रीकृष्णः पदतलेन द्वारं पुनन् श्रीपादारविन्द रजसा द्वारि निद्रयानः सन् । तत्र करीतुकामं हिंसितुमिच्छुं नागं कुवलयापीडाख्यं गजमेव ववर्ष । लूनवैरी छिन्नशत्रुः । कीदृशं नागम् । मदजलेन स्तीर्णानन छन्नवक्त्रम् । पटधूणमुखं पटच्छादितं मुखं यस्य तम् । कर्णौ धुनानं कम्पयन्तम् । अभिशिञ्जानं शृणन्तं हिंसयन्तम् । अभिपूतरोपं संपूर्णरोपम् ॥—पुनमिति । १४८२ पूञ् पवने । पवनं शोधनम् । शतरि 'प्वादीनां ह्रस्वः' इति ह्रस्वः । लूनेति । १४८३ लूञ् छेदने । कर्मणि क्ते 'ल्वादिभ्यः' इति नत्वम् । स्तीर्णेति । १४८४ स्तॄञ् छादने । कर्मणि क्तः । करीतुकामम् । १४८५ कॄञ् हिंसायाम् । तुमुनि 'तुमः कामे मनसपि' इति मलोपः । वृणेति । १४८६ वृञ् वरणे । भरण इत्यप्येके । धुनानम् । १४८७ धूञ् कम्पने । शानच् । क्र्यादय उदात्ता उभयतो भाषाः । श्रृणन्तम् । १४८८ शॄ हिंसायाम् । शता । अभिपूर्तेति । १४८९ पॄ पालनपूरणयोः । कर्तरि क्ते 'न ध्याख्यापॄमूर्छिमदाम्' इति नत्वाभावः ॥

तत्र स्परीतुमनसं रुपमाशृणन्त-
मम्याप्तुमुन्मदभरं स भृणन्यमापे ।

त्वामेष संप्रति मृणामि दृणामि नागं
नो चेज्जृणत्तम नरानकृणन्नृणीहि ॥ ७ ॥

स तत्राम्बष्ठं हस्तिपकं भृणन् भर्त्सयन् बभाषे । कीदृशं हस्तिपकम् । स्परीतुमनसं हन्तुकामम् । रुषमावृणन्तं स्वीकुर्वन्तं छादयन्तं वा । उन्मदभरमुद्भूतदर्पातिशयम् । एषोऽहं त्वा सम्प्रति मृणामि हिंसयामि । नाग गज दृणामि विदारयामि । हे जृणत्तम वृद्धतम नो चेत् एतन्नेच्छसि चेत् । त्व नरान् अकृणन् अहिंसन् ऋणीहि मार्गात् अपगच्छ ॥— स्परीतुमनसामिति । १४९० स्पॄ हिंसायाम् । तुमुन् । प्राग्वन्मलोप । आवृणन्तम् । १४९१ वॄ वरणे । शता । वॄ वरणभरणयोरित्येके । भरम् । भृणन् । १४९२ भॄ भर्त्सने । भरणे इति केचित् । 'ॠदोरप्' । शता च । मृणामि । १४९३ मॄ हिंसायाम् । दृणामि । १४९४ दॄ विदारणे । भये च । द्रुमे । द्वयोर्लट् । जृणदिति । १४९५ जॄ वयोहानौ । झॄ इत्येके । जृणाते शता । नरान् । १४९६ नॄ नये । पचाद्यच् । अकृणन् । १४९७ कॄ हिंसायाम् । शता । ऋणीहि । १४९८ ॠ गतौ । लोट् ॥

इत्थं हरौ गृणति हस्तिपकोऽपि कोपी
जीनोऽप्यहं न तु रिणामि भियेति वादी ।
पार्श्वे लिनन्नजमचोदयदुन्मदान्ध-
मल्लीनशक्तिमतिघोरजवं प्लिनन्तम् ॥ ८ ॥

हरौ इत्थं गृणति वदति सति, हस्तिपकोऽपि कोपी सन् अहं जीनो वृद्धोऽपि भिया न तु नैव रिणामि गच्छामीति वादी वदनशीलो गजं पार्श्वे लिनन् श्लिष्टो भवन् अचोदयत् हन्तुं प्रेरितवान् । उन्मदान्धमुद्भूतेन मदेनान्धम् । अल्लीनशक्तिमल्लीना आच्छादिता शक्तिर्यस्य तादृशं सन्तम् । अतिघोरजवं यथा तथा प्लिनन्तं गच्छन्तम् ॥— गृणतीति । १४९९ गॄ शब्दे । शता । शॄप्रभृतय उदात्ता परस्मैभाषा । जीनः । १५०० ज्या वयोहानौ । कर्मणि क्ते 'ग्रहिज्या—'इति सम्प्रसारणे 'हलः' इति दीर्घे ल्वादित्वान्नत्वम् । रिणामि । १५०१ री गतिरेषणयोः । रेषणं वृकशब्दः । लट् । लिनन् । १५०२ ली श्लेषणे । शता अल्लीनेति । १५०३ व्ली वरणे । गतौ श्लेषणे च द्रुमे । कर्मणि क्त । प्लिनन्तम् । १५०४ प्ली गतौ । शता । वृत् । प्वादयो वृत्ताः । ल्वादिषु गणान्त ॥

व्रीतावशत्रुंहितजुषाब्रिणता गजेन
भ्रक्षेतुमक्षमनसा समनुद्रुतेन ।
बद्धः करेण भगवान्विहर्ति वृणानः
श्रथ्नन्निबद्धममुमाशु तलैरमथ्नात् ॥ ९ ॥

१ अधातुपाठस्थोऽयम्.

श्नता दुष्टाना मतिं क्लिश्नन् पीडयन् । परिविष्टं विप्रयुक्तमपगतं पापं येषां ते सद्भिः ॥— तुभ्नन्निति । तुभे· शता । क्लिश्नन् । १५२२ क्लिशू विबाधने । अश्नताम् । १५२३ अश भोजने । द्वयो· शता । ध्रस्तम् । उध्रसितान् । १५२४ उध्रस उञ्छे । उकार इदित्येके । मतद्वये कर्मणि निष्ठा । ऐष्यत । १५२५ ईष आभीक्ष्ण्ये । पौन.पुन्यं भृशार्थो वा आभीक्ष्ण्यम् । तच्च प्रकरणादिप्राप्ताया क्रियाया इत्यौचित्याज्ज्ञेयम् । अस्मा· त्कर्मणि लङ् । परिविष्टेति । १५२६ विष विप्रयोगे । कर्तरि क्त ॥

प्रुष्णन्सतां प्रियमयं प्लुषिताङ्गरागः
पुष्णन्मुदं मृगदृशां रिपुधाम मुष्णन् ।
वक्त्रारविन्दखचितस्मितखौनदाभो
रङ्गं गतोऽसभुवि दन्तवरं प्रगृह्णन् ॥ १२ ॥

अयं भगवान् असभुवि दन्तवर प्रगृह्णन् रङ्गं गतः प्राप्त । कीदृश· । सता प्रियं प्रुष्णन् पूरयन् । प्लुषितः स्निग्धो निविडो अङ्गरागो यस्य स· । रिपूणा धाम प्रतापं मुष्णन् । मृगदृशा मुद पुष्णन् । वक्त्रारविन्दात् खचितेन नितान्तोत्पन्नेन स्मितेन खौनती नितान्तं उत्पद्यमाना आभा यस्य स ॥—प्रुष्णन् । १५२७ प्रुष १५२८ प्लुष स्नेहनसेचनपूरणेषु । मोहनदाहनयोरप्याह शंकरः । प्रुषेः शता । प्लुषितेति । प्लुषेः कर्तरि क्त । पुष्णन् । १५२९ पुष पुष्टौ । मुष्णन् । १५३० मुष स्तेये । द्वयोः शता । खचितेति । १५३१ खच भूतप्रादुर्भावे । भूतप्रादुर्भावो नितान्तोत्पत्ति । खव इत्येके । हेट इत्यप्येके । खचे कर्तरि क्त । खौनदिति । खवेरनुनासिकादौ श्नि परे ऊठ् । तस्य शता । श्नन्यादय उदात्तेत· । क्लिशिविषिविवर्जमुदात्ताश्च । प्रगृह्णन् । १५३२ ग्रह उपादाने । उदात्त· स्वरितेत् । अस्माच्छता । इति श्नाविकरणम् ॥

अथ मल्लरङ्गं गते भगवति कंसस्यावस्थामाह—

संचोरयन्तमरिगर्वमशेषभद्रं
चिन्तन्तमन्तकमिवाप्रमयत्र्यवीर्यम् ।
प्रस्फुण्डयन्नपि तमप्युपलक्ष्य कंस-
स्तत्रास कुन्दकसुलालितमिन्दितश्रीः ॥ १३ ॥

प्रस्फुण्डयन् परिहसन्नपि कंस आसं प्रासं तं श्रीकृष्णमन्तकमिवाभ्युपलक्ष्य दृष्ट्वा तत्रास भीतवान् । कुन्दकै· अनृतभाषिभिः सुलालिता मिन्दिता प्रवृद्धा श्रीर्यस्य सः । कीदृशं तम् । अरिगर्वं सचोरयन्तम् । अशेषभद्रमशेषाणा मङ्गलम् । चिन्तन्तं निरूपयन्तम् । अयन्त्र्यमसकोच्यमनिवारणीयं वीर्यं यस्य तम् ॥—सचोरयन्तमिति । १५३३ चुर स्तेये । अकार उत्तयर्थ । 'णिचश्च' इति तङ् चुरादेर्नेति मतं माधवदूषितं ते-

१. 'सेवन' इति धातुपाठः.

शाम्वरीभि स्वमायाभिर्जनमतिमासम्वयन् स्वसवन्धा कुर्वन् ॥—सपक्ष्येति । १५४९ **पक्ष** परिग्रहे । ल्यप् । अवर्णि । १५५० **वर्ण** वर्णने । प्रेरणेऽपीति केचित् । भावे चिण् विचूर्णनेति । १५५१ **चूर्ण** प्रेरणे । अस्य क्षोदनमप्यर्थ । तदेव वा प्रेरणमित्युक्तम् । असात्ल्युट् । अप्रार्थित. । १५५२ **प्रथ** प्रख्याने । क्षेपे च द्रुमे । कर्तरि क्तः । पर्थित । १५५३ **पृथ** प्रक्षेपे । पथ इत्येके । कर्मणि क्त । आसम्वयन् । १५५४ **पन्व** सवन्धने । १५५५ शम्वेत्येके । साम्वेत्यन्ये । साम्वे' शता । शाम्वरीभिः । शम्बेर्वाहुलकादरप्रत्यये शम्वर । तस्येयं शाम्वरी ॥

> सा पूतना च शिशुभक्षणकुट्टनोत्का
>
> जज्ञे प्रपुट्टितकृपेण विचुट्टिताघा ।
>
> वात्यासुरः पुनरनट्टयविसुट्टकः स-
>
> न्नेतेन लुण्ठितवलोऽजनि शाठितात्मा ॥ १६ ॥

एतेन सा पूतना जज्ञे । प्रपुट्टिताल्पीभूता कृपा यस्य तेन । शिशूना भक्षणे कुट्टने छेदने चोत्कोत्सुका विचुट्टितमल्पीभूतं गतमघ यस्या' सा । पुन —वात्यासुर एतेन लुण्ठितवलो मुषितवलोऽजनि जनित । अनट्टयविसुट्टक आदरणीयानामनादरकृत् सन् भवन् शाठितात्मा असस्कृतचित्त ॥—भक्षणेति । कुट्टनेति । १५५६ **भक्ष्य** अदने । १५५७ **कुट्ट** छेदनभर्त्सनयो पूरणे इत्येके । द्वयोर्ल्युट् । प्रपुट्टितेति । विचुट्टितेति । १५५८ **पुट्ट** १५५९ **चुट्ट** अल्पीभावे । द्वयो कर्तरि क्तः । अनट्टयविसुट्टक । **अट्ट** १५६० **पुट्ट** १५६१ अनादरे । अल्पीभावे च द्रुमे । क्रमात् 'अचो यत्' इति यत्, ण्वुल् च । लुण्ठितेति । १५६२ **लुण्ठ** स्तेये । अनादरे च द्रुमे । शाठितेति । १५६३ **शाठ** १५६४ **श्वठ** असस्कारगत्यो । श्वठि इति केचित् । सस्कारे च द्रुमे । आद्य आलस्ये च । लुण्ठिशाठ्यो कर्मणि क्त ॥

> आश्वाठितारिकुलतुञ्जविपिञ्जशीलः
>
> सपेसयन्गृहमसान्त्वयदेष गोपीः ।
>
> सुश्वल्कनाः सुमधुरप्रियवल्कनाभिः
>
> प्रस्नेहयन्न च कदाचिदसिस्मिटत्ताः ॥ १७ ॥

एष गृह सपेसयन् प्राप्नुवन् गोपीरसान्त्वयत् । आश्वाठितस्यागतस्यारिकुलस्य तुञ्जविपिञ्जशीलो हिंसा हणशील । हननशील इति यावत् । ता• सुमधुरप्रियवल्कनाभिः सुमधुरै प्रियभाषणै प्रस्नेहयन् स्निग्धा कुर्वन् कदाचिदपि नासिस्मिटदनादृतवान् । सुश्वल्कना शोभनोक्तीर्गोपी ॥—आश्वाठितेति । श्वठे कर्तरि क्तः । तुञ्जविपिञ्जेति । १५६५ **तुजि** १५६६ **पिजि** हिंसावलादाननिकेतनेषु । दाने च द्रुमे । तुज पिज इत्येके । लजि लुजि इत्यन्ये । तुजिपिज्योर्घञ् । सपेसयन् । १५६७ **पिस** गतौ ।

वर्हादिमण्डितसुभण्डितविग्रहोऽसौ
प्रच्छर्दितः किल वकेन च पुस्तितार्तिः ।
संवुस्तिते गिरिमखे परिचोद्य गोपा-
न्प्रानक्यद्धरिमखं मदधक्कनार्थी ॥ २० ॥

वर्हादिमण्डित सुभण्डितो भृश कल्याणीभूतो विग्रहो यस्य स । असौ वकेन प्रच्छर्दित किल । पुस्तिता दत्ता वकस्यार्तिर्येन स । सवुस्तिते आदृते गिरिमखे गोपान् परिचोद्य प्रेरण कृत्वा मदधक्कनार्थी इन्द्रस्य दर्पनाशनार्थी सन् हरिमखं प्रानक्कयदनाशयत् ॥— मण्डितेति । १५८७ मडि भूषाया हर्षे च । सुभण्डितेति । १५८८ भडि कल्याणे । कर्तरि क्त । प्रच्छर्दित । १५८९ छर्द वमने । कर्मणि क्त । पुस्तितेति । १५९० पुस्त १५९१ वुस्त दानादरयो[1] । अनादरे च द्रुमे । कर्मणि क्त । सवुस्तितेति । प्राग्वत् क्त । परिचोद्य । १५९२ चुद सचोदने । सचोदनं प्रश्न प्रेरणा च । ल्यप् । प्रानक्कयत् । १५९३ नक्क १५९४ धक्क नाशने । नक्केर्लङ् । धक्कनेति । धक्केर्ल्युट् ॥

दुर्दान्तचक्पशुपचुक्कनमप्यरौत्सी-
त्प्रक्षालितक्षितितलातुलवर्षरोधी ।
संदोलयन्नधिकपोलितमद्रिराजं
संचोलितं सुवहुमूलितशाखिवृन्दैः ॥ २१ ॥

अद्रिराज गोवर्धन सदोलयन्नुत्क्षिपन् प्रक्षालितक्षितितल मार्जितभूतलमतुलं वर्षं रोद्धुं शील यस्य तादृश सन् । पशुपाना चुक्कन व्यथामरौत्सीत् निवारितवान् । दुर्दान्तचक् अशान्तपीडक । अधिकपोलितमतिमहान्तं सुवहुभिर्मूलितै प्ररूढै शाखिवृन्दै. सचोलितमत्युच्छ्रितं चाद्रिराजम् ॥—दुर्दान्तचगिति । १५९५ चक्क १५९६ चुक्क व्यथने । चिक्क इति चके । चक्के क्विप् । चुक्कनम् । चुक्केर्ल्युट् । प्रक्षालितेति । १५९७ क्षल शौचकर्मणि । कर्मणि क्त । तलेति । १५९८ तल प्रतिष्ठायाम् । अच् । अतुलेति । १५९९ तुल उन्माने । क । चुरादिणिचोऽनित्यत्वात् तदभाव । सदोलयन् १६०० दुल उत्क्षेपे । शता । पोलितम् । सचोलितम् । मूलितम् । १६०१ पुल महत्वे । १६०२ चुल समुच्छ्राये । १६०३ मूल रोहणे । त्रिभ्य कर्तरि क्त ॥

पाल्यप्रवेलनकरोऽयमवेलयद्रा-
गन्यांश्च तेलितकृप: खलु कंसचाल्यान् ।
संपालयेद्भिमतल्लृप्यपशुल्वभूमा
क्ष्मामेप राम इव शूर्पनखाविचोटी ॥ २२ ॥

1. 'आदरानादरयो.' इति धातुपाठे

आश्वर्तितो रणभुवं सवलोऽत्र रेजे
विश्वभ्रिताभ्रकुहरे सति तूर्यनादे ॥ २४ ॥

तूर्यनादे विश्वभ्रिताभ्रकुहरे व्याप्ताकाशे सति स च सवल रणभुवमाश्वर्तित प्राप्तोऽत्र रेजे । क्षम्पद्भियामभिमत । क्षम्पन्ती क्षाम्यन्ती धीर्येषा तेषामिष्ट । कंसपीडया प्रक्षञ्जिताना कृच्छ्रेण जीवता स्वजनाना चिन्तनेन जातरोष ॥—क्षम्पदिति । १६२० क्षपि क्षान्त्याम् । शपि शता । प्रक्षञ्जितेति । आश्वर्तितेति । विश्वभ्रितेति । १६२१ क्षंजि कृच्छ्रजीवने । १६२२ श्वर्त गैत्या च । १६२३ श्वभ्र च । आद्ययो कर्तरि क्त । श्वभ्रे कर्मणि क्त । श्वभ्रि विलार्थे च द्रुमे ॥

चाणूर एनमथ विज्ञपयन्नृपाज्ञा
चण्डातकं सुयमयंश्चहको वभाषे ।
युध्यस्व भीतिरहितो वलयन्खलु त्वं
कीर्तिं चयस्व चपयापि नृपप्रसादम् ॥ २५ ॥

चाणूर एन नृपाज्ञा विज्ञपयन् वोधयन् वभाषे । हेतौ शता । चण्डातकं मल्लयुद्धोचितं वास. सुयमयन् दृढ वेष्टमानो वध्नन् । चहक शाठ्यकर्ता । वलयन् शक्तो भवन् । त्व भीतिरहितो युध्यस्व कीर्ति चयस्व नृपप्रसादमपि चपय । द्वयोरार्जयेत्यर्थ ॥—इत पर सप्त मित । ज्ञप मिच । अस्य ज्ञानज्ञापने अर्थाविति स्थितम् । विज्ञपयन्निति [१६२४ ज्ञप ज्ञानज्ञापनमारणतोपणनिशाननिशामनेषु ।] ज्ञपे शता । सुयमयन् । १६२५ यम च परिवेषणे । तच्चात्र वेष्टनम् । चकारान्मिदित्यनुषज्ञ । अस्माच्छता । चहक । १६२६ चह परिकल्कने । ण्वुल् । चप इत्येके । तस्य वा मित्त्व द्रुमे । रहित । १६२७ रह त्यागे । कर्तरि क्त । वलयन् । १६२८ वल प्राणने । शता । चयस्वेति । चपयेति । १६२९ चिञ् चयने । णिच्युभयपदित्वेन ञित्त्वफलाभावादस्य णिज्विकल्प । तत्र णिचि 'चिस्फुरोर्णौ' इति वा आत्वे पुक् । अन्यत्र वृद्धि । उभयत्र मित्वाद्ध्रस्व । अणिचि णिचि च लोट् । मितो गता । 'नान्ये मितोऽहेतौ' । अहेतुमण्ण्यन्तेषु एभ्योऽन्ये मितो न स्यु । तेन चुरादिषु अमन्तादीना मित्त्वं न ॥

बुद्धिर्न घट्टयतु तेऽस्तयतां जनानां
मध्ये न खट्टय वलं गजसट्टकोऽसि ।
न स्फिट्टयामि किमु चुम्बभिया स्थितोऽसि
किं पूलिताभ्रकुतपुंसनयात्र पुंसाम् ॥ २६ ॥

अस्तयता सघातीभवता जनाना मध्ये ते वुद्धिर्न घट्टयतु न चलतु । वलं न खट्टय

१ 'छजि' इति धातुपाठे २ 'गत्याम्' इति धातुपाठे. ३ 'श्रभ्र' इति धातुपाठे

तान्वैरिं स्तुतां प्रपञ्चरहितां मिताक्षरा गिरमकीर्तदभाषत। अरातिवर्धी शत्रुच्छेदी ॥—सुगाजितेति। १६४७ गज १६४८ मार्ज शब्दार्थौ। १६४९ मर्च चेत्येके। मार्जि. शुद्धौ च द्रुमे। गर्जे. कर्तरि क्त। विमार्जनानि। मार्जेर्ल्युट्। मर्चयति। मर्चे शाता। घारितेति। १६५० घृ प्रस्रवणे। स्रावणे इत्येके। छादने च द्रुमे। अस्मात् कर्मणि क्त। प्रपञ्चेति। १६५१ पचि विस्तारवचने। विस्तारमात्रे च द्रुमे। घञ्। तेजितेति। १६५२ तिज निशाने। कर्मणि क्त। अकीर्तत। १६५३ कृत संशब्दने। 'ऋदुपधाच्चाक्लृपिचृतेः' इत्यत्र तपरत्वेन ऋदुपधस्य व्यावर्त्यत्वाण्णिचि त्वृदुपधत्वफलाभावादस्य णिज्विकल्प। तत्र णिजभावे शपि लङ्। अरातिवर्धी। १६५४ वर्ध छेदनपूरणयो। णिनि. ॥

> किं कुम्व्यते सदसि लुम्वितवैभवोऽहं
>
> वालोऽस्मि तुम्वितविरोधिभयाश्च यूयम्।
>
> प्रह्लापये किमपरं परिचुण्टितारि-
>
> र्भूयोऽयमेलयति चेदिह को निषेद्धा ॥ २९ ॥

मया सदसि किं कुम्व्यते आच्छाद्यते। अत्र राजसदसि सर्वं प्रत्यक्षमेव वक्तव्यम्, न किंचिद्गूहनीयमस्ति। अहं लुम्वितवैभवोऽदृष्टसामर्थ्यो वालोऽस्मि। यूयं तुम्वितविरोधिभया नाशितशत्रुभयाश्च भवथ। अतोऽहमपरं किं प्रह्लापये। व्यक्तं वदामि। एतावदेव वदामि। परिचुण्टितारिश्छिन्नशत्रुरयं भूप एलयति युद्धार्थं प्रेरयति चेदिह लोके को निषेद्धा निषेद्धयति। न कोपि ॥—कुम्व्यते इति। १६५५ कुवि आच्छादने। कुभि इत्येके। कुम्वे कर्मणि लट्। लुम्वितेति। तुम्वितेति। १६५६ लुवि १६५७ तुवि अदर्शने। अर्दन इति केचित्। कर्मणि क्त। प्रह्लापये। १६५८ ह्लप व्यक्तायां वाचि। क्लृप इत्येके। लट्। परिचुण्टितारे। १६५९ चुटि छेदने। कर्मणि क्त। एलयति। १६६० इल प्रेरणे। लट् ॥

> यद्वा भियात्र किममृक्षकसूरिसेव्यो
>
> धर्मेतरम्यगनयम्रगयं हि राजा।
>
> अम्लेच्छलोकसहिते सदसीह तस्मा-
>
> त्को म्रूसयिष्यति शिशूननिवर्हणीयान् ॥ ३० ॥

यद्वा अत्र भिया किम्। न किंचित् भेतव्यम्। अयं राजा धर्मेतरम्यक् अधर्मच्छेत्ता। अनयम्रक् अनयच्छेत्ता च। हि यस्मात्—अमृक्षकाणां साधुशब्दभाषिणां सदाचाराणां सूरीणां सेव्यश्च। तस्मादम्लेच्छलोकसहिते सज्जनपूर्णेऽस्मिन् सदसि अनिवर्हणीयान् हन्तुमयोग्यान् शिशून् को म्रूसयिष्यति हनिष्यति। न कोऽपि। अतो न भेत-

१. 'शातने' इति पाठः.

लोको हरेर्वलमचेतयमान एत-
द्युद्धं मृगेन्द्रशशदंशनवत्प्रदंसन् ।
संडापितः सदसि डेपितवृष्णिवीरे
भोजेन्द्रतत्रणविनिन्द्यममन्त्रतैवम् ॥ ३३ ॥

हरेर्वलमचेतयमानो जानँल्लोक एतद् युद्ध मृगेन्द्रशशयोरन्योन्यदंशनवत् अतिविषमं प्रदसन् पश्यन् । सदसि सडापित सघातीभूत. सन् भोजेन्द्रतन्त्रणविनिन्दी कंसराज्य-कार्यनिन्दाशील एवममन्त्रत गूढमभाषिष्ट । डेपिता सघातीभूता वृष्णिवीरा यस्मिन्॥— आकुस्मादात्मनेपदिन । कुस्मधातुपर्यन्तं णिच्यात्मनेपदिन एव । अचेतयमान इति । १६७३ **चित** सचेतने । तच्च ज्ञानम् । अस्माच्छानच् । दशनेति । १६७४ **दशि** दंशने । ल्युट् । प्रदंसन् । १६७५ **दसि** दंसनदर्शनयो[1] । दस इत्येके । दंसन वर्मग्रहणम् । दशनदर्शनयोरित्यन्ये । अत्राकुस्मीयस्तङ्णिज्योग एवेति इदित्वाण्णिजभावे तङ् न । तेन दंसे शपि शता । सडापित । १६७६ **डप** १६७७ **डिप** सघाते । डपे कर्तरि क्त. । डेपितेति । डिपेश्च पूर्ववत् क्तः । तन्त्रणेति । १६७८ **तन्त्रि** कुटुम्वधारणे । कुटुम्व इति पृथक् धातुरित्येके । तन्त्रेर्ल्युट् । अममन्त्रत । १६७९ **मन्त्रि** गुप्तभाषणे । लुडि चङ् ॥

प्रस्पाश्य मुष्टिमभितर्जयते प्रभर्त्स्यो[2]
मल्लो विवस्तयिपुरे[3]नमग[4]न्धनीयम् ।
किष्क्येत निष्कपमनिष्कितकान्तिरेष
बालोऽमुना नृपतिलालनयाद्य कष्टम् ॥ ३४ ॥

मल्लो मुष्टिं प्रस्पाश्य दृढं गृहीत्वा एनं विवस्तयिपु पीडयितुमिच्छुरभितर्जयते भर्त्सयते । अगन्धनीयं पीडयितुमयोग्यम् । अद्य नृपतिलालनया राजेच्छया अमुना एष बालो निष्कप किष्क्येत हिंस्येत कष्टम् । अनिष्कितकान्तिरपरिमितकान्ति । कीदृशो मल्ल. । प्रभर्त्स्यस्तर्जयितु योग्य ॥—प्रस्पाश्येति । १६८० **स्पश** ग्रहणश्लेषणयो ल्यप् । अभितर्जयते । १६८१ **तर्ज** १६८२ **भर्त्स** तर्जने । तर्जेर्लट् । प्रभर्त्स्य । भर्त्सेर्ण्यत् । विवस्तयिषु । १६८३ **बस्त** १६८४ **गन्ध** अर्दने । वस्ते सन्यु । अगन्धनीयम् । गन्धेरनीयर् । किष्क्येत । १६८५ **किष्क**[5] हिंसायाम् । हिष्क इत्येके । किष्के कर्मणि लिङ् । अनिष्कितेति । १६८६ **निष्क** परिमाणे । कर्मणि क्त. । लालनया । १६८७ **लल** ईप्सायाम् युच् ॥

आघूणिताक्षमपि च स्मिततूणितास्यं
भ्रूणस्य शाठ्यजनयक्ष्यमवेक्ष्य गात्रम् ।

१ 'दर्शनदशनयो' इति धातुपाठे २ 'प्रभत्स्यो' इति पाठ ३. 'रेतम' इति पाठः. ४. 'गर्धनीय' इति पाठ.. ५. 'विष्क' इति धातुपाठे.

अस्या मन क इव गूरयतेऽत्र मुष्टिं

नो खल्वक्षाम्यमिह लक्षयितुं क्षमा स्म ॥ ३५ ॥

अपि च गुणसार्भकस्य बालस्य पात्रमवेक्ष्य क इव अस्या मनोऽभिचार सन् मुष्टिं गूरयते प्रहरणार्थमुद्यमयति । न कोऽपि । कीदृशं पात्रम् । आकूणिताक्षं खस्मानन्धा मुमचाशीपत्संव्यवेचिनेत्रम् । सितवृणितास्य मन्दहासपूरितमुखम् । शाठ्यवनमसर्म श्लाघ्य जनैर्यस्य पूज्यं च । तस्मात् वयमयाम्य बहुमयोग्य कर्म इह लक्षयितुं इष्टुं नो नहि क्षमाः स्म सत्य भवामः ॥—आकूणितेति । तूणितेति । १६८८ कूण संकोचने । १६८९ तूण पूरणे । द्वयोः कर्मणि क्तः । मृणस्य । १६९० भ्रूण आशंसायाम् । आशंसने प्रार्थने इति पमर्षे क्तः । शाठ्येति यस्येति । १६९१ शठ श्लाघायाम् । १६९२ यक्ष पूजायाम् । द्वयोर्ण्यत् । क्षामनेति । १६९३ स्यम वितर्के । ल्युट् । गूरयते । १६९४ गूर उद्यमने । ण्वुल् । अक्षाम्यम् । १६९५ क्षाम १६९६ लक्ष आलोचने । क्षामे र्ण्यत् । लक्षयितुम् ल्क्षेस्तुमुन् ॥

कुत्स्या हि गालनपटा इव कष्टमेते ।

दुष्कीर्तिमालनपरा खलु कूटवृत्त्या ।

सद्भ्यन निरसितुं नहि वर्पिता स्म

किं कुर्महे खलजना इह मादयन्ताम् ॥ ३६ ॥

एते मालनपट्य इव योपमहणात् कुत्स्या हि कष्टम् । कूटवृत्त्या व्याजव्यापारेण दुष्कीर्तिमालनपरा दुर्यशःसंपादने तत्परा खलु वयम् । तथा सद्भ्यन व्याजेन शिष्टुपयसं व्यापारं निरसितुं नहि वर्पिता क्षपितसंबद्धाः स्मो भवामः । अतो वय किं कुर्महे । इह खलजना मादयन्तो दृप्ता भवन्तु ॥—कुत्स्या इति । १६९७ कुत्स अवक्षेपणे । ण्यत् । पाल्नेति । मालनेति । १६९९ गाल स्रवणे । १७०० मल आमन्डने । आमन्डनं मार्जनम् । द्वयोर्ल्युट् । कूटेति । १७०१ कूट अप्रदान । अप्रसादे इत्यन्ये । अप्रसाद कुरयापाकः कूटेरप् । १७०२ कुट्ट प्रतापन इत्यन्ये । चवनेति । १७०३ चञ्चु प्रलम्भने । ल्युट् । कलिरिक्षेके । तत्र निममाचे सर्वप्रेदकिल्य । वर्पिताः । १७०४ वृप संविभ पने । तत्र गर्भाधानसामर्थ्यं क्षपितसंबन्ध इति केचित् । असाद् क्वारि पः । मादयन्ताम् । १७०५ मद तृप्तियोगे । लोट् ॥

इत्यादि वाधदाषदेवनमध्य एव

श्लोक समालपदगारितकृष्णावीर्ये ।

१ आशाविषद्वयोः इति धातुपाठे २. '१६९८ गुठ छेदने' नोदाहृतः ३ आप्रदाने' इति धातुपाठः

कंसस्त्ववेदयमतिर्भयमानितोऽपि

निर्यावन: कुयुधि कुस्मयमान आस्त ॥ ३७ ॥

लोकोऽगारितकृष्णवीर्योऽज्ञातकृष्णवीर्य: सन् यावशतदेवनमध्ये एव यावशतस्य घोषमध्ये एव इत्यादि समालपत् । अवेदयमतिरज्ञमना कंसस्तु भयेन मानित: स्तब्धोऽपि कुयुधि कुत्सितयुद्धे निर्यावनो जुगुप्साहीन कुस्मयमान कुत्सितं स्मयमान आस्त॥—देवनेति । १७०६ दिवु परिकूजने । ल्युट् । अगारितेति । १७०७ गॄ विज्ञाने । विज्ञापने च द्रुमे । कर्मणि क्त । वेदयेति । १७०८ विद् वेदनाख्याननिवासनेषु । परिवादे चैके । वेदनं ज्ञानम् । 'अनुपसर्गाल्लिम्प–' इति शः । मानित: । १७०९ मान स्तम्भे । कर्तरि क्त । यावनेति । १७१० यु जुगुप्सायाम् । ल्युट् । कुस्मयमान । १७११ कुस्म नाम्नो वा कुत्सितस्मयने । कुत्सितस्मयनार्थो धातुरत्र पठितव्य । तस्माण्णिचि शानचि कुस्मयमान: । कुस्ममिति नामपदाद्वा तत्करोतीति णिचि तत्सिद्धिरित्यर्थ: । कुस्ममिति दृष्टं कुस्मयति (?) कारितमिति चेत् कोर्नित्यसमासत्वात् उपसर्गस्य च वाह्यत्वात् कारितमेव । एषामर्थो धातुखण्डे एव द्रष्टव्य ॥

संचर्चयन्नपनयानथ वुक्कयिष्णु:

श्वेवोग्रशब्दनपर: कररुद्धकाण: ।

मल्लो जिजम्भिपुरसूदितवीर्यमीशं

मुष्ट्या जजास वहु पाशितवांश्च दोष्णा ॥ ३८ ॥

अथ मल्ल ईशं जिजम्भिपुर्नाशयितुमिच्छुर्मुष्टया जजास प्रहतवान् । दोष्णा वहु वहुकृत्व पाशितवान् वद्धवाश्च । कीदृश । अपनयान् सचर्चयन्नावर्तयन् । श्वा इव वुक्कयिष्णुर्भषणशील । असूदितवीर्यमक्षीणवीर्यम् ॥—इत परं विकरणान्तरोक्ता एवोच्यन्ते । सचर्चयन्निति । १७१२ चर्च अध्ययने । अस्माच्छता । लक्षणया आवर्तनार्थता । वुक्कयिष्णु । १७१३ वुक्क भषणे । श्वरवस्तत् । इष्णुच् । शब्दनेति । १७१४ शब्द शब्दक्रियायाम् । ल्युट् । सोपसर्गस्त्वयमाविष्कृताविति द्रुमे । काण: । १७१५ कण निमीलने । एकनेत्रनिमीलने चेदम् । अस्मादच् । जिजम्भिषु । १७१६ जभि नाशने । णिजभावे सन्यु: । असूदितेति । १७१७ सूद क्षरणे । कर्तरि क्त । जजास । १७१८ जसु ताडने । णिजभावे लिट् । पाशितवान् । १७१९ पश वन्धने । पाशे क्तवतु ॥

द्रागामयन्विचटदस्थिकयाथ मुष्ट्या

आस्फोटयत्तमजितोऽपि स घाटिताङ्गम् ।

दिष्ट्यैष हिंसयति देव्यममुं युधीति

संमोदमर्जयति घोषति नाकिलोके ॥ ३९ ॥

१. 'चेतना' इति धातुपाठे २. 'विवासेषु' इति धातुपाठे. ३. 'ण ' इत्युभयत्र पाठ .

अथ नाकिलोके 'एष देवं सर्वनितम्बं भर्तुं युधि हिंसयति हिनस्ति रिपून्' इति घोषति सामिप्रायं प्रकाशयति संयोगमवगति वर्णयति सति अजितोऽपि निचटदस्ति क्षत्वा विद्यमानास्थिसंचया मुख्या झाग् आमयन् पीडयन् प्रास्फोटयत् निष्काममकरोत् । पाटितास्ते घनीभूतास्ते प्रहारमेवेन संकुचिताङ्गा वा ॥—आमयमिति । १७२० अम रोगे । घता । विघटयितेति । १७२१ घट १७२२ स्फुट भेदने । कटेर्गमोऽफ्लमेन पुराशिमिवोऽनि सत्वात् इपि घता । प्रास्फोटयत् । स्फुटेर्लङ् । चाटितेति । १७२३ घट संघाते । भेदने चेत्येके । कर्तरि क्तः । हिंसयति । इन्स्यर्थेऽथ' । एते च सार्थे णिचं मजन्तीत्सर्वैः । तेन हिंसेर्णिचि लट् । घटस्फुटवद्यानामपि इन्स्यर्थत्वमिष्यते । वीन्स्यर्थानामपि स्वा र्थिकणिचस्ति इमे । देश्यम् । १७२४ विधु मर्दने । परिकृत्मने इति केचित् । प्यात् । मवयति । १७२५ भर्ज प्रतियत्ने । येतो गुणान्तराधानं तत् (१) । आर्जनेऽप्यस्ति । अस्मात्क्त्वा । घोषति । १७२६ घुषिर् विशब्दने । शब्देन स्वामिप्रायप्रकाशनं तत् । स्तुतौ च इमे । अस्य मिश्रितक्त्वो नाम्यपोपः । तेन इपि घता ॥

> आक्रन्दयत्सु निभृतं नृपु शासिताशे
>
> पोथसमूपणविमोक्षणयार्हितामौ ।
>
> आज्ञापनामिह विभाज्य नृपेण दृष्टौ
>
> तौ अर्धनाय समयातयतां नियुद्धम् ॥ ४० ॥

नृपु निभृतं आक्रन्दयत्सु सततं क्रन्दत्सु तौ चाक्रकम्पौ (?) आज्ञापनां विभाज्य द स्वा नृपेण दृष्टौ । तावनाय अन्योन्यामिमवार्थं नियुद्धं बाहुयुद्धं समयातयतां संस्कृतवन्तौ सविशेषं कृतवन्तौ । शासिताशेषाशौ सकोपकाकवपवौ आमुर्तस्य च । अभ्यालं- कारानां च मुखार्थे स्थगेन अर्हितामौ पूजनीयविशेषयोमौ ॥—आक्रन्दयत्स्विति १७२७ आक्रः क्रन्द् सातत्ये । आक्रपूर्वः कन्दि सातत्ये मिचं भजते । घता । पथु(मु)क्षो राजकरोवतमो सातत्यं चेदम् । शासितेति । १७२८ लस शिल्पयोगे । शिल्पोपयोगे इति केचित् । अस्मात् कर्मणि क्तः उत्तमेति । १७२९ हसि १७३० भूष अलंकारे । दंशेर्भूषन् । भूषणेति । भूषेर्ल्युट् । विमोक्षणश्च । १७३१ मोक्ष असने । मुच् । अर्हितेति । १७३२ अर्ह पूजायाम् । कर्मणि क्तः । आज्ञापनाम् । १७३३ ज्ञा नियोगे । आङ्पूर्वं एवायम् । अस्माद्युच् । विभाज्येति । १७३४ भज विश्राणने । दानं तत् स्यप् । अर्धनाय । १७३५ मृधु प्रसहने । अमिमवश्च । स्युट् । समयातयताम् । १७३६ यत निकारोपस्कारयोः । परिभवसंस्कारौ तौ । वेदे च इमे । अस्मात्लङ् ॥

> नियोविदमहविमीसमविमहत्य
>
> महोऽय वासितविचारमयुष्यवस्स ।

1 सर्वकरणे' इति मातृपाठे 2 अतएव पाठः मातृपाठे नोपलभ्यते

रोषान्ध्यभावितमसृग्भिरकल्पयत्तं
कृष्णोऽपि नाकिजनराकितलाग्यवीर्यः ॥ ४१ ॥

अथ स मल्लो निर्यातितप्रहर्ति कृतप्रतीहारमीशमतितरां प्रहस्य वासितविचार छिन्नसंशय यथा तथा अचुच्यवत् जहास। कृष्णोऽपि रोषान्ध्येन रोषकृतेन मूढत्वेन भावितं मिश्रीकृतं तमसृग्भिरकल्पयत् मिश्रीकृतवान्। नाकिजनेन सुरजनेन राकितमास्वादितं लाग्यमास्वादनीयं वीर्यं यस्य स. श्रीकृष्ण. ॥—निर्यातितेति। निसथ धान्यादिप्रतिदाने। अस्मात् कर्मणि क्तः। वासितेति। १७३७ वस स्नेहनच्छेदापहरणेषु। 'उपहरणेषु' इति वा पाठः। तस्मात् प्राग्वत् क्त। विचारेति। १७३८ चर संशयने। असंशये च द्रुमे। घञ्। अचुच्यवत्। १७३९ च्यु सहने। हसने इति केचित्। च्युस इत्यन्ये। च्यावयतेर्लुङि चङ्। भावितम्। १७४० भुवोऽवकल्कने। अस्मावकल्कने णिच् स्यात्। तच्च मिश्रीकरणम्। अन्ये तु चिन्तने विपाचनेऽवकल्कने चेत्याहु। विपाचनम्। विपक्वीकरणम्। अस्मात् कर्मणि क्त.। अकल्पयत्। १७४१ कृपेश्च। मिश्रीकरणे णिच् स्यात्। अस्माल्लङ्। राकितेति। लाग्येति। १७४२ रक १७४३ लग आस्वादने। आद्योऽपि गान्त इत्येके। रक लघ इत्यन्ये। राके. कर्मणि क्त। लागेर्ण्यत् ॥

शौर्याञ्चितेन धृतलिङ्गितचेलकेन
संमोदितो हलधरोऽपि च मुष्टिकेन।
मुष्ट्या तुदन्मुहुरतित्रसदाशु दोर्भ्या-
मुभ्रासयज्जननुतस्तममोचयच्च ॥ ४२ ॥

हलधरोऽपि च मुष्टिकेन समोदित संसर्गं प्राप्तो मुहुर्मुष्ट्या तुदन् दोर्भ्यामाशु अतित्रसत् गृहीतवान् वारितवान् वा अमोचयच्च। कीदृशेन मुष्टिकेन। शौर्येणाञ्चिते नान्येभ्योऽधिकेन। धृतं लिङ्गित मिश्रीकृतं चेलं येन तेन। उभ्रासयद्भिरुञ्छवृत्तिभिर्जनैर्नुत' ॥—अञ्चितेनेति। १७४४ अन्चु विशेषणे। व्यावर्तनं तत्। कर्मणि क्त। लिङ्गितेति। १७४५ लिगि चित्रीकरणे। प्राग्वत् क्तः। समोदित.। १७४६ मुद संसर्गे। कर्तरि क्त.। अतित्रसत्। १७४७ त्रस धारणे। तच्च ग्रहणं वारण वा। लुङि चङ्। उभ्रासयदिति। १७४८ उभ्रस उञ्छे। उकार इदित्येके। उभ्रसे. शता। अमोचयत्। १७४९ मुच प्रमोचने। लङ् ॥

दोर्भ्यां भ्रासयतां प्रपोषितरुषां निर्दोलनोद्योगिनो
तेषां विक्रमणैरपाटि पटिमा शिक्षाप्यपोटि स्फुटम्।

१.'स्नेह' इति धातुपाठे. २. 'संशये' इति धातुपाठे.

स्थेमाछोटि जवोप्युसुंभि लघिमा चाभिज्यपिज्यभमो

रोपोऽल्लुम्भि रसो व्यमम्भि चलवत्ताल्रिह्वि चात्रसमी ॥ ४३ ॥

दोर्भ्यां भ्रास्यतां वत्तम्ममीस्थानेषु गृह्णतां प्रघोषितवतां सम्यग्धारितकोपानां परस्परं निर्दाम्नोद्योगिनां मुष्टिविदारणोद्योगिनां तेषां श्रीकृष्णरामचाणूरमुष्टिकानां विक्रमपै पराक्रमैः पटिमा पुरुसामर्थ्यं भपाटि कथितम् । स्थिता अभ्यासोऽपि सुष्ठमपोटि उच्च । स्थेमा देहस्थैर्यमछोटि । जव· प्रहारवेगोऽपि अतुम्भि । लघिमा शीघ्रका रित्वं चाभिज्यि । अध्यमः पीडाभावोऽपिपिज्यि । रोप कोपपौष्कल्यमल्लुम्भि । रसो युद्धकौतुकं व्यमम्भि । चलवत्ता एतावत् बलमिति अचलि । अमीभिर्भयाभावोऽत्रसि च । सर्वत्रापि भाषितं स्यात् प्रकाशितमित्यर्थः । एषां भाषार्थस्यापि सद्भावात् प्रकाशितमित्येव भावः ॥—श्रा स्वप· सप्तमीकात् । अतः परं स्थि(स्व)पर्यन्तेभ्य· कर्मसंभवे एव मिच् स्यात् । भ्रास्यतामिति । १७५० भ्रस भक्षणे । स्वता । प्रघोषितेति । १७५१ घुष पारणे । कर्मणि क्तः । निर्दाम्नेति । १७५२ दल विदारणे । घुष् । भपाटि । अपो टि अछोटि । अतुम्भि । चाभिज्यि । अपिज्यि । अल्लुम्भि । व्यमम्भि । अचलि । अत्रसि । इति । १७५३ पट १७५४ पुट १७५५ लुट १७५६ तुजि १७५७ मिजि १७५८ पिजि १७५९ लुजि १७६० भजि १७६१ लघि १७६२ त्रसि १७६३ पिसि १७६४ कुसि १७६५ दशि १७६६ कुशि १७६७ घट १७६८ घटि १७६९ बृहि १७७० बर्ह १७७१ बल्ह १७७२ गुप १७७३ धूप १७७४ विच्छ १७७५ चीव १७७६ पुथ १७७७ लोक १७७८ लोचृ १७७९ णद १७८० कुप १७८१ तर्क १७८२ वृतु १७८३ वृधु भाषार्थाः । एते एकत्रिंशत् । भासार्था इत्येके । पुतिपूर्णनेऽपि हमे । पदादिरस्यानां कर्मणि लुङि चिण् ॥

कश्चित्कष्टमविंसयद्गणमिम कुरु त्वया वद्धयतां

नाकुट्यं परिपाटयेति च परेणोद्धुप्टितोऽशुस्यत् ।

नाहं वर्हयितास्म्यवत्यमपि भो सर्वैरिह गोप्यते

धार्त्यं धूपय विच्छयन्क इव न त्वचीवनात्पोथयेत् ॥ ४४ ॥

तत्र प्रेक्षकेषु कश्चिदिमं रणं कष्टमवश्यमनोन्मभविंसयत्कथयत् त्वया कुर्मं च स्मतां वक्तु मोगमुष्यताम् । अकुट्य न परिपाटय अवकर्म्य न वद इति परेणोद्धुप्टित उक्तः पूर्ववादी व्यर्थुहयत् अकथयत । अहं न बर्हयितास्मि न वदिष्यामि । भोः हे भगवन्, अवस्त्यमवाच्यमपि इदं सर्वैर्गोप्यते कथ्यते । त्वं तान् सर्वान् धूपय कथय । विच्छयन् क इव त्वचीवनात् न पोथयेत् । एषु वदत्सु वदन् कामवतुष्णा न वदेत् । सर्वोऽपि वदेदेव ॥—भविंसयदिति । विशिक्षत् । कुंसम् । कुंसेर्णंत् । दंसयताम् । दंशेः कर्मणि क्षेत् । अकुंटसम् । कुंसेर्ण्यत् । परिपाटय । पाठेर्णेत् । उद्धुष्टित । कर्मणः क-

र्मणि क्त । अवृंहयत् । वृहेर्लङ् । वर्हयितास्मि । वहर्लुट् । वल्ह्यम् । वल्हेर्ण्यत् । गोप्यते । गोपे कर्मणि लट् । धूपय । धूपेर्लोट् । विच्छयन् । विच्छे. शता । चीवनेति । चीवेर्ल्युट् । पोथयेत् । पोथेर्लिङ् ॥

अलोचि चान्यैः समरेऽत्र कष्टतामलोकयन्दुष्यति नादयन्नपि ।
कोपः प्रभोः कोपयति प्रतर्क्यते पापश्च ही वर्त्यमवर्धयज्जनः ॥ ४५ ॥

अन्यैश्चालोचि अन्यैरपि एवमुक्तम् । अत्र समरे कष्टतामलोकयन् अकथयन् नादयन् कथयन् अपि दुष्यति । कुत । कोपयति वदति जने, प्रभो. कोप प्रतर्क्यते सर्वे प्रकाश्यते ऊह्यते वा वर्त्यमवर्धयन् वक्तव्यमवदन् पापश्च भवति । ही का वात्र गति । खेदार्थो हीशब्द' ॥—अलोचीति । लोचे कर्मणि लुङि चिण् । अलोकयन् । नादयन् । कोपयति । लोकेर्नादे कोपेश्च शता । प्रतर्क्यते । तर्किरूहेऽपि । तस्मात्कर्मणि लट् । वर्त्यम् । वर्तेर्ण्यत् । अवर्धयन् । वर्ध. शता ॥

भीतिं रोटय लञ्जयानयमसत्त्वाधञ्ज्यतां दंसय
कौर्यं भ्रंशय रुंसयाल्पमतितां भाग्यक्षयं रुंशय ।
मानं शीकय नाटयाकरुणतां दुर्वासनां घुण्टय
भ्रान्तिं जुञ्जय(?) भूपतेरिति जना गूढं मिथोऽरङ्घयन् ॥ ४६ ॥

भीतिं रोटय । अनय नयाभाव लञ्जय । असत्त्व आयञ्ज्यता प्रथमगण्यता दसय । कौर्यं भ्रशय । अल्पमतिता रुसय । भाग्यक्षय रुशय । मानं शीकय । अकरुणता नाटय । दुर्वासनां घुण्टय । भ्रान्तिमन्यथाप्रतिपत्तिं जुञ्जय (?) । सर्वत्रापि अकथयन्नित्यर्थः । प्रकाशितवन्त इति वा । जना भूपतेर्भूपतिमधिकृत्य इति एव गूढं अरङ्घयन् अकथयन् ॥—रोटय । लञ्जय । अञ्ज्यताम् । दंसय । भ्रशय । रुंसय । रुशय । शीकय । नाटय । घुण्टय । जुञ्जय । इति । १७८४ रुट १७८५ लजि १७८६ अजि १७८७ दसि १७८८ भ्रशि १७८९ रुसि[1] १७९० रुशि १७९१ शीक[2] १७९२ नट १७९३ घुटि १७९४ जिंचि[3] १७९५ रघि १७९६ लघि १७९७ अहि १७९८ रहि १७९९ महि चेति पञ्चदश चैके पठन्ति । १८०० लडि १८०१ तड १८०२ नैड[4] चेत्यन्ये । अर्थ प्राग्वत् । तत्र रोट्याद्येकादशाना 'समुच्चयेऽन्यतरस्याम्' इति सर्वलकारस्थाने विहितो लोट् । अञ्ज्येस्तु ण्यत् । अरङ्घयन्निति । 'समुच्चये सामान्यवचनस्य' इति अनुप्रयुक्तस्य रङ्घेर्लङ् । तेन लोडन्तानामपि भूतार्थता । अन्येषा भाषणीयविशेषवाचित्वात् रङ्घेस्तदभावात् सामान्यार्थता ॥

वीर्यं दुरंहमभिरंहय मंहयाभां
मौर्ख्यं प्रलण्डय च तोडय निर्भयत्वम् ।

१ 'रुशि शीक रुसि' इत्यय क्रमो धातुपाठे. २ 'शीकृ' इत्ययमनूदितधातुपाठे. ३. 'जि चि' इति द्वौ भिन्नौ धातू धातुपाठे. ४. 'नल' इति धातुपाठे.

पुनरभ्येत्य हरिं मुहृढं प्रजहार ॥— अजरदिति । १८१४ जॄ वयोहानौ । १८१५ ज्रि इत्येके । जॄधातो शता । विरिक्तेति । १८१६ रिच वियोजनसंपर्चनयो । कर्तरि क्त । विशिष्टेति । १८१७ शिष असर्वोपयोगे । विपूर्वोऽतिशये । तस्मात् कर्तरि क्त । तापी । १८१८ तप दाहे । णिनि. । रिच्यादयस्त्रयो णिजभावेऽनिट । अतर्पन् । १८१९ तृप तृप्तौ । प्रीणने च द्रुमे । शपि शता । छर्दितेति । १८२० छृदी संदीपने । ईदित्त्वं नेति केचित् । अस्मात् कर्मणि क्त॰ । चृप छृप तृप दृप संदीपने इत्यप्येके । अप्रदर्भन् । १८२१ दृभी भये । शता ॥

कृष्णोऽविश्रथितारिभीरभिमयन्दोष्णा ग्रथन्भ्रामय-
न्क्राथ्यं प्रोथितवानशीकितमति भूमावचीकन्नमुम् ।
मल्लोऽर्द्यः स च हिंसितः पदमुपासात्सीद्धरेः शुन्धितः
तावत्स्वं बलमच्छदज्जुपितवान्मुष्ट्या हली मुष्टिकम् ॥ ५० ॥

कृष्णोऽविश्रथितारिभीस्त्यक्तशत्रुभयः सन्नभिमुखमयन् गच्छन् अमुं दोष्णा ग्रथन् बध्नन् भ्रामयंश्च भूमौ प्रोथितवान् अभिहतवान् । क्राथ्यं हिंस्यमशीकितमतिमसहनबुद्धिमचीकन्नसहमानोऽर्द्यो हिंसनीय स मल्लश्च हिंसित । शुन्धित शुद्ध सन् हरेः पदं श्रीविष्णुलोकमुपासात्सीत् प्राप्तवान् । तावत् तस्मिन्नवसरे हली स्वं निजं बलमच्छदन् मुष्ट्या मुष्टिक जुपितवान् हिंसितवान् ॥— श्रथितेति । १८२३ श्रथ मोक्षणे । बन्धे च द्रुमे । हिंसायामिति केचित् । कर्मणि क्त । अभिमयन् । १८२४ मी गतौ । शता । ग्रथन् । १८२५ ग्रथ बन्धने । शता । क्राथ्यम् । क्रथ हिंसायामिति स्वरितेतं केचिदाहु । तस्माण्ण्यत् । अशीकितेति । १८२६ शीक आमर्षणे । १८२७ चीक च । आद्य सेचने । शीके कर्तरि क्त । अचीकन् । चीके शता । अर्द्य । १८२८ अर्द हिंसायाम् । स्वरिवेत् । तस्माण्ण्यत् । हिंसितः । १८२९ हिसि हिंसायाम् । इदितोऽस्य युजादिफलं चिन्त्यम् । कर्मणि क्त । उपासात्सीत् । १८३१ ओङः षद् पद्यर्थे । पद्यर्थो गति । लुङि सिचि वृद्धि । शशपो॰ सदे॰ लृदित्वाल्लुङ्यङेवेति भेदः । शुन्धित । १८३२ शुन्ध शौचकर्मणि । कर्माविवक्षया कर्तरि क्त । अच्छदन् । १८३३ छद अपवारणे । स्वरितेदित्येके । शता । जुपितवान् । १८३४ जुष परितर्कणे । ऊहो हिंसा वा तत् । परितर्पणे इत्येके । अस्मात् क्तवतु । अस्येदित्त्वाभावादिट् ॥

कूटाद्येषु हतेषु धावितमतिष्वन्येषु धावत्सु च
स्वैरं तत्र जनान्प्रयन्विगलितश्रन्थान्कचान्ग्रन्थयन् ।
आपन्खेदमरिं तनञ्जनहितं चिक्रीड गोपैर्हरि-
स्तूर्योत्थो वितनन्ध्वनिर्दिवमगाद्दूतो यथा वादितः ॥ ५१ ॥

१ अत्र '१८२२ दम सदर्भे' इत्यय धातुर्नोदाहृत . २. अत्र '१८३० अर्ह पूजायाम्' नोदाहृत .

क्रुद्धेन तेन अकथि अपि कथितम् । अपिशब्दः पूर्ववाक्यार्थसमुच्चये । न केवलं नामर्षत् इत्येतावत् एवमुक्तं च । अवर्यगणने अनीप्सितव्यानां गणने । शठ्येन प्रथममेव कथनीयेन भो परिजना , मन्त्री श्वठ्यता सम्यक् भाष्यताम् । पापौ तौ कृष्णरामौ पाशाना वटनैर्वेष्टनैः प्रपटय्य सम्यग्बद्ध्वा पुरात् विरह्यौ त्याज्यौ । न तु हननपरिश्रमो मा भूत् वहूना सतोपातिदर्शनेन सविशेषवाद्यघोषश्रवणात् । कुपित आह । के मूढा स्तनयित्नुनिर्गदनवत् मेघघोषवत् तूर्यध्वनिं कुर्वते । मल्लौघ एव अपतयत् परिपातोचितः वधयोग्य । तु रिपुर्न पताचक्रे न पतित ॥—इत परमदन्ता॰ । अकथि । १८५२ **कथ** वाक्यप्रवन्धे । णिजन्तात् कर्मणि चिण् । अतोलोपस्य स्थानिवत्त्वान्न वृद्धि॰ । अवर्येति । १८५३ **वर** ईप्सायाम् । ण्यत् । गणने । १८५४ **गण** सख्याने । तच्च सख्याविज्ञानं भागशोऽवस्थान च । अस्माल्ल्युट् । शठ्येन । १८५५ **शठ** १८५६ **श्वठ** सम्यगवभाषणे । शठेरचो यत् । श्वठ्यताम् । श्वठे कर्मणि लोट् । प्रपटय्य । १८५७ **पट** १८५८ **वट** ग्रन्थे । 'वट वेष्टने' इत्येके । पटेर्ल्यप् । 'ल्यपि लघुपूर्वात्' इत्ययादेश । वटनै । वटेर्ल्युट् । विरह्यौ । १८५९ **रह** त्यागे । यत् । स्तनयित्नु इति । १८६० **स्तन** १८६१ **गदी** देवशब्दे । ईकारो द्विवचनकृत॰ । न त्वीदित्वार्थः । 'स्तनिहृषिपुषिगमिमदिभ्यो णेरित्नुच्' इति स्तनेरित्नुचि 'अयामन्ता' इत्ययादेश । निर्गदनेति । गदेर्ल्युट् । अपतयत् । १८६२ **पत** गतौ वा । अय गतौ वा णिज्वान् । तत्र णिचि लङ् । पताचक्रे । णिजभावेऽप्यदन्तत्वेन अनेकाच्त्वादाम्प्रत्यय । पातेति । पत गतौ वेत्यदन्तत्व विकल्प्यत इति मते अनदन्तत्वे घञ् । 'पत ऐश्वर्यगत्यो॰' इति द्रुमे ॥

झटिति पषयन्त्वस्माद्गोपाः स्वरापयताधिकं
रचयत मुहुर्दण्डाघातं वनं कलयन्त्वमी ।
चहकमहितं नन्दं वद्ध्वास्य सारयतो धनं
हरत कृपकस्यारेस्तातं हत श्रथयत्तमम् ॥ ५४ ॥

गोपा झटिति अस्मात् पुरात् पषयन्तु गच्छन्तु । एतान् अधिक स्वरापयत भर्त्सयत । [मुहुर्दण्डाघात रचयत ।] अमी वन कलयन्तु गच्छन्तु । नन्दं वद्ध्वा अस्य धनं हरत । चहकै शाठ्यवद्भिर्महित पूजितम् । सारयतो दुर्वलीभवत । कृपकस्य दुर्वलस्य अरे श्रीकृष्णस्य तात वसुदेवं हत विगतप्राण कुरुत । श्रथयत्तममतिदुर्वलम् ॥—पषयन्त्विति । १८६३ **पष** अनुपसर्गात् । अयमनुपसर्गो गतावदन्त॰ । वन्ध वाधास्पर्शेषु च द्रुमे । अस्मात् प्राप्तकाले लोट् । स्वरापयत । १८६४ **स्वर** आक्षेपे । 'कथादिपाति स्पायो(?)णौ पुग्लुक्त्वम्' इति शाकटायनसूत्रेण पुकि वृद्धि । प्राग्वल्लोट् । रचयत । कलयन्तु । १८६५ **रच** प्रतियत्ने । कृतार्थे च द्रुमे । १८६६ **कल** गतौ सख्याने च । द्वयोर्लोट् । चहकेति । १८६७ **चह** परिकल्कने । ण्वुल् । महितम् । १८६८ **मह** पू-

यायाम् । कर्मणि क्तः । सारयतः । १८६९ सार १८७० कृप १८७१ श्रथ दौर्बल्ये । दीर्घवतो पाठोऽप्यस्तीत्यर्थे । सारे णिच् । कृपकस । कृपेष्णुस् । श्रथय इति । भये घञ् ॥

यो मत्सुम स्पृहयते मयि भामितेऽपि
संसूचयत्परिगुणांश्च मदभ्रकोटी ।
स क्षोटितोत्थसमगोमितभूमिवत्त-
श्चश्रौ कुमारयति मारयतोमसेनम् ॥ ५५ ॥

तमुग्रसेन यश्रौ कुमारयति क्रीडति मारयत वियतप्राणं कुरुत । यो मम सर्वं स्पृहयते । मयि भामिते कुपिते अपि अरिगुणान् संसूचयति च । मदभ्रकोटी मदत्यागमसखी । निरताम् । क्षोटितौत्थसे क्षीयत्थम् । अगोमितायां अनुपलिप्तायां असंस्कृतायां भूमौ वसम् ॥—स्पृहयत इति । १८७२ स्पृह ईप्सायाम् । लट् । भामितेति । १८७३ भाम क्रोधे । कर्तरि क्तः । संसूचयति । १८७४ सूच पैशुन्ये । लट् । अभ्रकोटी । १८७५ कोट भक्षणे । कोड इत्येके । क्रोड इत्यपरे । कोटेर्णिनि । क्षय क्षेपे च कुमे । क्षोटितेति । १८७६ क्षोट क्षेपे । कर्तरि क्तः । अगोमितेति । १८७७ गोम उपलेपने । कर्मणि क्तः । कुमारयति । १८७८ कुमार क्रीडायाम् । लट् ॥

शीत्स्यं न सामनमभीप्सिह वेलयामि
पल्यूल्यतां यतुयनो मम वातकोऽपि ।
छिद्रं गवेषयितुमेव तु वासयन्ते
ये ते निवासितधियो ह्यसुभिर्विभाज्याः ॥ ५६ ॥

अहमभीप्सु यतुम्भिहेदायां सामनमनुसरणं शीत्स्यमभ्यसनीयं न वेलयामि प्राप्तकालतया नोपदिशामि । बहूनामनुसरणाभ्यासकालो न भवतीति वदामीत्यर्थः । मम वातकः सेवको यतुयनोऽपि पल्यूल्यतां छिद्यताम् । ये छिद्रं गवेषयितुमन्वेष्टुमेव वासयन्ते सेवन्ते तेऽसुभिर्विभाज्याः पृथक्कर्तव्याः मारयितव्याः । यस्मात् पल्यूल्यतां निवासितधियः आच्छादितबुद्धयः ॥—शीत्स्यमिति । १८७९ शील उपधारणे । अभ्यासत्वात् । 'अचो यत्' । सामनम् । १८८० साम सान्त्वप्रयोगे । ल्युट् । वेलयामि । १८८१ वेल कालोपदेशे । लट् । कालेऽपि धातुरित्येके । पल्यूल्यताम् । १८८२ पल्यूल लवनपवनयोः । कर्मणि लोट् । वातकः । १८८३ वात सुखसेवनयोः । गतिसुखसेवनेष्वेके । ण्वुल् । गवेषयितुम् । १८८४ गवेष मार्गणे । तुमुन् । वासयन्ते १८८५ वास उपसेवायाम् । लट् । निवासयति । १८८६ निवास आच्छादने । कर्मणि क्तः । विभाज्याः । १८८७ भाज पृथक्कर्मणि । यत् ॥

१ क्षेप इति धातुपाठे २ लवनपवनयोः इति धातुपाठे

ते मामद्य सभाजयन्ति भुवने यैरून्यते सत्पथो
न क्वापि ध्वनयन्तु वेदमुखरास्ते कूटनीया द्विजाः ।
इत्यूचे स हि केतयन्परिजनान्सेनापतीन्ग्रामय-
न्स्वामात्यान्कुणयन्भटांश्च गुणयन्नृणां मुदं स्तेनयन् ॥ ५७ ॥

यैः सत्पथः सन्मार्ग ऊन्यते त्यज्यते ते मामद्य सभाजयन्ति प्रीणयन्ति पश्यन्ति सेवन्ते च । वेदमुखरा न क्वापि ध्वनयन्तु शब्दं कुर्वन्तु । ते वेदाभ्यासशीला द्विजा कूटनीया परितापनीयाश्च । स कंस इति ऊचे । हि किमर्थं परिजनान्केतयन्, सेनापतीन् ग्रामयन्, स्वामात्यान् कुणयन्, भटान् गुणयन् । श्रावयन्निति सर्वत्रार्थः । हेतौ शता । नृणां सर्वजनानां मुदं स्तेनयन्नपहरन् ॥—सभाजयन्तीति **१८८८ सभाज** प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्येके । लट् । ऊन्यते । **१८८९ ऊन** परिहाणे । कर्मणि लट् । ध्वनयन्तु । **१८९० ध्वन** शब्दे । लोट् । कूटनीया । **१८९१ कूट** परितापे । परिदाहे इति केचित् । कूड दाहे इति हरदत्तः । कूटेरनीयर् । केतयन् । ग्रामयन् । कुणयन् । गुणयन् । इति **१८९२ केत १८९३ ग्राम १८९४ कुण १८९५ गुण** चामन्त्रणे । चकारात् कूटेति च । केतादेः शता । **१८९६ केत** श्रावणे निमन्त्रणे च । श्रावणं समयोद्घोषणम् । निमन्त्रणमाज्ञा । **१८९७ कुण** संकोचने च । भासने च द्रुमे । स्तेनयन् । **१८९८ स्तेन** चौर्ये । शता ॥

तच्चाकर्ण्य सरोषमुत्पदयते स्मोत्तुङ्गमश्वं हरिः
प्रोत्तिष्ठन्नसिचर्मणी गृहितवान्कंसोऽपि मृग्योऽसताम् ।
द्रष्टृणा कुहकोऽथ शूरयितृभिः स्तुत्योऽसिना वीरयां-
चक्रे स्थूलितभीतिरर्थितवधाः सत्रा शनैर्गर्वितैः ॥ ५८ ॥

हरिश्च तत् कंसवाक्यमाकर्ण्योत्तुङ्गमश्वं सरोषमुत्पदयते स्म उत्पतितवान् । कंसोऽपि प्रोत्तिष्ठन्नसिचर्मणी गृहीतवान् । असतां जरासंधादीनां मृग्योऽन्वेष्यः । अथ द्रष्टृणा कुहको विस्मापकः सन्नसिना वीरयांचक्रे पराक्रमं चकार । शूरयितृभिः पराक्रमकृद्भिः स्तुत्यः । स्थूलितभीतिः परिवृद्धभयः सत्रा शनैर्यैर्ज्ञातविसर्गमुग्मिर्देवैरर्थितवधः । गर्वितैरिदानीमेव कंसनाशात् स्वेष्टसिद्धिः स्यादिति अहंकृतैः ॥—आ गर्वादात्मनेपदिनः । उत्पदयते । **१८९९ पद** गतौ । लट् । गृहीतवान् । **१९०० गृह** ग्रहणे । क्तवतु । मृग्य । **१९०१ मृग** अन्वेषणे । यत् । कुहक । **१९०२ कुह** विस्मापने । ण्वुल् । शूरयितृभि । **१९०३ शूर १९०४ वीर** विक्रान्तौ । शूरेस्तृच् । वीरयाचक्रे । वीरेर्लिट् । स्थूलितेति । **१९०५ स्थूल** परिबृंहणे । कर्तरि क्त । अर्थितेति । **१९०६ अर्थ** याच्ञायाम् । कर्मणि क्त । सत्रेति । **१९०७ सत्र** संतानक्रियायाम् । सततं दीर्घकालतया क्रियत इति सत्र । घञ् । गर्वितै । **१९०८ गर्व** माने । कर्तरि क्त । आगर्वीया गता ॥

१ 'सङ्केत' इति पठितोऽयं धातुपाठे. २ 'उपयाच्ञायाम्' इति धातुपाठे

आसूत्रयस्स हि तथाक्रमसिम्भारे
मोमुत्रितारिरविलक्षणया रणेषु ।
तुम्पारतुम्परितधीरणकृपपवेशो
नो चक्षमे पुटयितुं तमकत्रितोष्मा ॥ ५९ ॥

ईषा पुटयितुं संसर्गं प्राप्तुं स्प्रष्टुं यथा नो नहि चक्षमे शक्तोऽभूत् स तथा अक्षिम्र-
चारैः करक्रमगैरक्रमासूत्रयत् वेष्टितवान् । कीदृशः । तुम्पारतुम्परितधीरणकृपपारतुम्परि
ताम्पिपारक. । अकत्रितोष्मा अकत्रितोऽक्षिपित पूर्णे ऊष्मा यस्य सः । कीदृश कंसः ।
अक्षिस्स्वमया अतिकूरत्वेन मोमूत्रितारिः पुनः पुनः बद्ध वा मीपितशत्रुवर्ग: ॥—आसू
त्रयेति । १९०९ सूत्र वेष्टने । लङ् । मोमूत्रितेति । १९१० मूत्र प्रस्रवणे ।
अस्मात् सुप्सिसुत्रि' इति यङन्तात् कर्मणि क्त । लक्षणया । १९११ रूक्ष पारुष्ये ।
युच् । तिम्पारेति । १९१२ पार १९१३ तीर कर्मसमाप्तौ । पारेर्यम् । तीरणेति ।
तीरेस्युंट् । पुटयितुम् । १९१४ पुट संसर्गे । तुमुन् । अकत्रितेति । १९१५ कत्र
शैथिल्ये । कर्तरि क्तः ॥

त्वा लक्षयामि लक्षयन्त्वमुना जना मां
त्वं विष्टप गरुडयन्हरिरेव चेत्किम् ।
लोकोऽद्य घातयतु कृष्णमिति प्रलापी
त सपवनमपि न क्षमयितु स लेभे ॥ ६० ॥

अहं त्वां लक्षयामि वर्णं करोमि । जना अमुना मां लक्ष्यन्तु लक्ष्मावत्ताम् ।
त्वं विष्टपं सर्वलोकं गरुडयन् पक्षेणातिक्रामन् साक्षात् श्रीहरिरेवासि चेत् मम तेन
किम् । न बाधकोऽपि । लोकोऽद्य कृष्णं घातयतु कृष्णस्य वधं कथयतु । इति ॥
प्रलापी संपतन् स कंस त श्रीकृष्ण क्षमयितुं कालेन लेशमपि न लेभे । उपायं न लब्ध
वान् ॥—लक्षयामीति । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' । एतदेव विवृणोति ।
तत्करोति तदाचष्टे' । लक्षयामि । करोत्यर्थे णिचि लट् । लक्षयन्तु । आख्यानार्थे
णिचि लोट् । गरुडयन्निति । 'तेनातिक्रामति' । अतिक्रमार्थे णिचि शता । 'धातुरूपं च' ।
कृदन्तान्णिचि धातुरूप भवन्ति । अनेन आख्यानात्कृतस्तदाचष्टे इति णिच् । कृत्प्रकृ-
तिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' इत्येतदुक्तम् । तेन कृष्णस्य कर्मत्वम्, वधमाचष्टिरत्या
हमेर्णिजन्तत्वं च । तस्माल्लोट् । घातयतु । क्षमयितुमिति । कर्तृकरणाद्धात्वर्थे । कर्तृणि
करणानि परस्मपदीनि तेभ्यस्तद्धात्वर्थे णिच् स्यात् । इति क्षमयितुमिति तुमुन् ॥

लोके यष्कयतीह चित्रितमहामध्ये स्वयं चित्रय
न्दोष्णा सत्रसुर्यस्य तस्य चटयन्ड्स्याद दुहादसुम् ।

१ निष्पार' इति पाठः. २. १९१५ मेक दर्शने' इत्येके मायमुदाहवः.

धाम्नोच्चैर्लजयन्विमिश्रितजने रङ्गे निपात्याथ तं
द्राक्सङ्ग्रामयमाणशस्त्रजकिणस्तोम्ये पपातोरसि ॥ ६१ ॥

इह चित्रिते कृतचित्रलेखने महामञ्चे स्थितः श्रीकृष्णः लोके वष्कयति पश्यति दोष्णा स्वयं चित्रयन्नाश्चर्यं कुर्वन् उदस्य उच्चैराहत्य तस्य हस्तात् खड्गं वटयन् पृथक्कुर्वन्नमुमगृह्णात् । अथ तं विमिश्रितजने रङ्गे निपात्य तस्योरसि द्राक् पपात । धाम्नोच्चैर्लजयन् प्रकाशमानः । सङ्ग्रामयमाणशस्त्रजकिणस्तोम्ये सङ्ग्राममयमाणानां युद्धकर्तॄणां शस्त्रजकिणैः स्तोम्ये श्लाघनीये वक्षसि ॥—वष्कयतीति । १९१७ वष्क[1] दर्शने । शता । चित्रितेति । १९१८ चित्र चित्रीकरणे । आलेख्यकरणं तत् । कर्मणि क्तः । चित्रयन् । 'कदाचिद्दर्शने' । अद्भुतदर्शने चार्थे चित्रधातोर्णिच् । क्षणिकदर्शने । अस्माच्छता । उदस्य । १९१९ अंस समाघाते । विभाजने च द्वमे । ल्यप् । वटयन् । १९२० वट विभाजने । वटीत्येके । वटे शता । लजयन् । १९२१ लज प्रकाशने । लजीत्येके । वण्टिलञ्ज्योरिदित्त्वेऽप्यत्र पाठाददन्तकार्यं पुगादि स्यादेवेति माधवः । मिश्रितेति । १९२२ मिश्र सपर्के । कर्तरि क्तः । सङ्ग्रामयमाणेति । १९२३ सङ्ग्राम युद्धे । अयमात्मनेपदी । शानच् । स्तोम्ये । १९२४ स्तोम श्लाघायाम् । यत् ॥

यो ह्यच्छिद्रित एव वीर्यशतकृत्तस्मिन्पतत्यन्धय-
न्पिष्टाङ्गः स ममार दण्डितखलस्येशस्य पादाङ्कितः ।
कृष्णोऽप्यश्रुजलाङ्किते ऽतिसुखयत्यामुच्य पुष्पोत्करं
देवौघे हृतदुःखने रसयति व्याकर्षदेनं क्षितौ ॥ ६२ ॥

योऽच्छिद्रित एवाविद्धकर्ण एव तस्मात् पूर्वमेव पूतनावधादिवीर्यशतकृत् हि । तस्मिन् पतति पिष्टाङ्गोऽन्धयन् मोहं प्राप्तः स कंसो ममार । दण्डितखलस्य पीडितदुष्टजनस्य श्रीकृष्णस्य पादे अङ्कितो मुद्रितः । तदा च कृष्णोऽपि देवौघे अश्रुजलेन अङ्किते चिह्निते पुष्पोत्करमामुच्य अतिसुखयति भृशं सुखमनुभवति हृतदुःखने हृतदुःखानुभवे रसयति भगवद्धापारमास्वादयति सति च । एनं कंस क्षितौ व्याकर्षत् । कंसद्विष्टानां निजभक्तानां यदूनां पीडानिवृत्त्यर्थमेतत् ॥—अच्छिद्रितेति । १९२५ छिद्र कर्णभेदने । कर्णेति पृथग्धातुरित्येके । कर्मणि क्तः । अन्धयन् । १९२६ अन्ध दृष्ट्युपघाते । शता । दण्डितेति । १९२७ दण्ड दण्डनिपातने । कर्मणि क्तः । अङ्कित इति । अङ्कितेति । १९२८ अङ्क पदे लक्षणे च । १९२९ अङ्ग च । द्वयोः कर्मणि क्तः । अतिसुखयति । १९३० सुख १९३१ दुःख तत्क्रियायाम् । तत्क्रिया तदनुभवः । सुखे शता । दुःखनेति । दुःखेर्ल्युट् । रसयति । १९३२ रस आस्वादनस्नेहनयोः । शता ॥

नित्यं व्ययापितमलो हृदि रूपयंस्तं
अच्छेदितप्रकृतिरच्छदितस्वरूपम् ।

1. 'वल्क' इति धातुपाठे.

अथ स्ववर्ग्यभूतेन केनचिदमानुपकर्मणि कृते गोपकुमाराणां प्रहर्षातिशयं वर्णयति—

हस्तयमानाः पादयमाना गोपकुमारा नृत्तमकुर्वन् ।
श्वेतयमानाश्चाश्वयमानास्तत्पुरमायन्केशवपक्ष्याः ॥ ६५ ॥

गोपकुमारा हस्तयमाना पादयमानाश्च हस्त पाद हर्षातिशयेन विक्षिपन्त सन्त. नृत्तं अकुर्वन् । केशवपक्ष्या कंसभयात् देशान्तर गता गता (?)केचित् केचित्(?)श्वेतयमाना' श्वेताश्वेन चरन्त । अन्ये अश्वयमाना अश्वतरेण गच्छन्तश्च तत् पुर मधुरापुर आयन् आगतवन्त ॥—हस्तयमाना । पादयमाना इति । 'णिङङ्गान्निरसने' इति द्वयोर्णिङ् । श्वेतयमाना । अश्वयमाना इति । 'श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च' इति श्वेताश्वाश्वतरशब्दाभ्या णिङ् । अश्वशब्दतरशब्दयोर्लोपश्च ॥

खला विपुत्कुक्कुरवद्भयार्ता ययुश्च संभाण्डयमानभृत्या. ।
भयेन संचीवरिताः स्थिता ये ते तु प्रविष्टा नगरं प्रहृष्टाः॥ ६६ ॥

विपुच्छा कुक्कुरा इव अथ कृतपुच्छा श्वान इव भयार्ता खला सभाण्डयमानभृत्या समाचयमाना उद्धार्यं वस्तूनि एकीकृत्य वध्नन्तो भृत्या येपा ते तथाभूता सन्तो ययु । ये सज्जना भयेन सचीवरिताश्चीवरमर्जितवन्त परिहितवन्तो वा । पूर्वं स्थितास्ते तु प्रहृष्य नगर मधुरापुर प्रविष्टा ॥—विपुदिति । 'पुच्छादिपु धात्वर्थे इत्येव सिद्धम् । 'पुच्छभाण्डचीवराण्णिङ्' इति न वक्तव्यम् । 'प्रातिपदिकाद्धात्वर्थे' इत्येव णिच्सिद्धे वहुलोक्त्यात्मनेपदसिद्धेश्च । तत्र 'पुच्छादुदसने पर्यसने व्यसने वा' इति णिङि ततः 'क्विप् च' इति क्विप् । पुतं छादयतीति व्युत्पत्त्या पुच्छशव्दस्य सयोगान्तलोपे तकारशेषाद्विपुदिति स्यात् । सभाण्डयमानेति । 'भाण्डात्समाचयने' इति णिङि शानच् । सचीवरितेति । 'चीवरादर्जने परिधाने वा' इति णिङि कर्तरि क्त ॥

इति धातुकाव्यव्याख्याने तृतीय सर्ग ।

निहत्य कंसं मधुरानगर्यां निवेश्य राजानमथोग्रसेनम् ।
संप्रेष्य नन्दं विजहार कृष्णस्तत्रैव रामेण सहाखगेहे ॥ ६७ ॥

क्वचित्सुयोज्या धात्वर्थाः क्वाप्ययोज्या उणादिपु ।
क्वचित्कथंचिद्योज्याः स्युर्वक्ष्यन्ते तत्र तत्र ते ॥ ६८ ॥

हलन्त्यमुपदेशेऽजित्यादिर्ञिटुडवस्तथा ।
एभिर्धात्वनुवन्धानां लोपे स्यात्प्रत्ययः पुनः ॥ ६९ ॥

हलन्त्यमिति लुप्येते स्वरार्थावन्तिमौ हलौ ।
तरौ लचौ नपौ चेति स्वरार्थाः प्रत्ययेपु षड् ॥ ७० ॥

आरूढो गरुडं भुजान्तरलसच्छ्रीवत्समालावलि-
श्यामान्दोलितचामरानिलरयैः प्रोड्डीयमानोऽम्बरे ।
धन्वी नद्धसुवर्णकङ्कणधरो धाराधरश्यामलः
काले मे चरमे ममाक्षिपदवीमायातु नारायणः ॥ ७१ ॥

इति मातृकाव्यं समाप्तम् ।